॥ श्रीः ॥

ॐ नमः परमात्मने ।

श्रीचक्रपाणिदत्तकृतस्य

# प्रौढमनोरमाखण्डनग्रन्थस्य

## प्रस्तावः ।

महर्षिपाणिनिकृतसूत्रपाठाध्यायास्तथा तद्व्याख्यानस्य महर्षिपतञ्जलिकृतमहाभाष्यस्य एवं कौशिक्यवृत्तेः काशिकावृत्तेः भोजराजकृतसरस्वतीकण्ठाभरणाभिधवृत्तेरपि क्रममनादृत्य कैयटहरदत्ताद्याचार्याणां मतं च क्वचिद्विखण्ड्य सिद्धान्तकौमुदीं तद्व्याख्यां च श्रीभट्टोजिदीक्षिताः प्रणीतवन्त इति नैव तिरोहितमस्ति विदुषाम् । किन्तु

"अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः"(१) ॥

इति लोकोक्तौ दुर्गसिंहोक्तमनलङ्ख्य श्रीचक्रपाणिदत्तेन प्रौढमनोरमाग्रन्थस्य खण्डनं कृतम् । एवं पण्डितसम्राड्जगन्नाथेनापि प्रौढमनोरमाकुचमर्दनाख्यं खण्डनं कृतमित्युभयोरन्वेषणे कृते मयैकं चक्रपाणिदत्तकृतप्रौढमनोरमाखण्डनपुस्तकं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तमानं विक्रमीय१८५८संवत्सरे लिखितमन-

(१) तिमिङ्गिलो मत्स्यभेद इति अमरकोशे । राघवो मत्स्यभेदेऽपीति कोशः ।

लिखुर्ब समधिगतं मुद्रणद्वारा तत्प्रकाशने प्रवृत्तम्। अस्य ग्रन्थस्य सं
मालोचने कृते भट्टोजिदीक्षितपौत्रेण कृते शब्दरत्नग्रन्थे तद्व्याख्या
बालभट्टापरनामधेयवैद्यनाथभट्टपायगुण्डेकृते भावप्रकाशे च "दूरि
खण्डनकारोक्तमपास्त" मित्यादि(१)दर्शनादाननीयत्वेनास्मिन् अ
महासमादरः सञ्जात इति काशीविद्यासुधानिधिनामके ऽस्मि
मासिकपत्रे प्रकाशितः सन्नचिरेणैव सर्वेषां सुलभो भवेदित्येतदर्थी
मुद्रयितुमारब्धोऽधिकं तु समासे मुद्रणे निरूपयिष्यामीति शिवम् ॥

---

(१) दीर्घेत्युपलक्षणं यणोऽपि प्रत्यासत्त्या ऋन्निमित्तकार्यमात्रस्य तेन वारणात
अत एवाह गुणेति । ऋतो ङीत्यनेनेति भावः । यत्तु गुणे तस्य स्थानिवत्त्वेन दीर्घो
यणिति जगन्नाथादिस्तन्न तथा सति बाधकस्य जागरूकत्वात् पूर्वस्यैव स्थानिवत्त्व
च। एतेन गुणोत्तरमपीत्यादिखण्डनकृदाद्युक्तिरपास्ता। वार्तिकस्य साधारणत्वाद्दाह
भाष्ये चेति । सर्वत्रेत्युक्त्या तस्य प्रकृतिभावपरत्वेनावङ्परत्वमिति खण्डनकृद्वा
परास्ता। खण्डनकारोक्तिं खण्डयितुमाह । तस्येति । चाक्रवर्मणस्येत्यर्थः । अनुस
न्यत्वादितीति । एतेन नलोपं प्रति नुटोऽसिद्धत्वान्नुट् स्यादिति मूलोक्तं चिन्त्यमि
खण्डनकारोक्तमपास्तम्। यत्तु प्रत्ययान्तपर्युदासे कार्ये सुब्लोपनिमित्तप्रत्ययलक्ष
नेत्यत्रेदं मानं विशेषापेक्षत्वात् एवंचाहनित्यत्र तिङ्लोपनिमित्तप्रत्ययलक्षण
तत्र कार्ये दुर्वारत्वेनाधातुरिति न कार्यमिति खण्डनकृत् । तत् खण्डयति ।
चेति । ज्ञापकमिति ॥



बनारस
गवर्नमेण्टसंस्कृतकालेज
पुस्तकालये
१५ फ़रवरी १८९९ ई० ।

} विन्ध्येश्वरीप्रसादद्विवेदी



───o◇o───

ॐ नमः परमात्मने ।

भट्टोजिदीक्षितकृत—

# सिद्धान्तकौमुद्या व्याख्यानस्य प्रौढमनोरमाग्रन्थस्य खण्डनम् ।

श्रीचक्रपाणिदत्तविरचितम् ।

विरोधिनां तिरोभावभव्यो यद्भारतीभरः ।
वटेश्वरं गुरुं शेषवंशोत्तंसं भजामि तम् ॥ १ ॥
दारितरिपुवचोजं सच्चक्रपाणिर्नरहरिं नत्वा ।
विद्वन्मण्डलहृद्यं तत्परमतखण्डनं तनुते ॥ २ ॥

## हयवरट् ।

हृदयोपदेशोऽडिणोः शल्लोश्च हकारग्रहणार्थः । यत्तु हयवरट्सूत्रे हकारोपदेशप्रयोजनमडादौ तद्ग्रहणमित्युक्त्वा हल्सूत्रमुपादाय एतत्सूत्रप्रयोजनं झलादौ ग्रहणम् । तेनाधुक्षदित्यादि सिध्यतीत्युक्तम् । तत्र प्रथमं हकारोपदेशप्रयोजनमुत्तरत्र सूत्रप्रयोजनमिति भेदेन ग्रहणे किं बीजम् । न तावदाद्ये हका-

रानुपादानेऽपि यादिग्रहणाय सूत्रमावश्यकमिति ह-
कारोक्तिः। अन्त्ये तु हकारानुपादाने वलादयः प्रत्या-
हारा रेफेणैव ग्राह्या इति लकारोऽपि नोपादेय इति
सूत्रोपादानमिति। तथा सति रेफात् पूर्वं होपदेशे
रेफेण च वलादिग्रहणे रुदिहीत्यादिसिद्धौ लकारो-
पादानप्रयोजनानुक्तेर्न्यूनतेति चिन्त्यम्। किन्तर्हि चर-
मलकारोपादाने प्रयोजनमिति चेत्। हरिर्हरिरित्यत्र
खरवसानयोरिति विसर्जनीयस्य तस्य वा शरीति विस-
र्गविकल्पादेश्चाप्रवृत्तिः। एवं वाग्घरिरित्यादावपि
चर्त्वाप्रवृत्तिः। रेफात् पूर्वं होपादाने तस्य खर्यरोर्ग्रह-
णादिति ॥

## हलन्त्यम्।

अत्र हल्प्रत्याहारसिद्धावनेन लस्येत्संज्ञा त-
त्सिद्धौ च हल्प्रत्याहारसिद्धिरित्यन्योन्याश्रय इति
हलित्यावर्तत इत्याकरः। अत्र केचित्। स्यादेतत्
हलित्येकदेशस्य तन्त्रावृत्त्येकशेषान्यतममस्तु हस्य ल
इति च व्याख्यास्यते। सामीप्यं षष्ठ्यर्थः। यद्वा। मास्
तन्त्रादि अस्तु समाहारद्वन्द्वः। हल् च ल् चेति। लका
रस्य संयोगान्तलोप इति चेन्मैवम्। आद्ये समासस
क्लिष्टत्वात्। न हि ब्राह्मणकम्बल इत्यादौ ब्राह्मणस

मीपवर्त्यन्यदीयः कम्बलः प्रतीयते। न वा चित्रगुश-
ब्दाच्चित्रगवीनां समीपवर्ती इत्यादिः प्रतीयते। अत
एवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमा-
करे। किम्बहुना ब्राह्मणस्य कम्बलश्चित्रा गौर्यस्येति
व्यस्तप्रयोगोऽपि तत्रानिष्टः। द्वितीयेऽपि संयोगान्त-
लोपो दुर्लभः। यणः प्रतिषेधारम्भात्। तत्प्रत्याख्या-
नपक्षेऽपि झलो झलीति झलग्रहणमपकृष्य झलः
संयोगान्तलोपविधानाच्च। किञ्च पदार्थबोधं विना
वाक्यार्थबोधासम्भवेन हलप्रत्याहारसिद्धेः प्रागेतत्सूत्रा-
र्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः। अस्यां चावस्थायां
हलशब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः। सहविवक्षाया
ऽसम्भवात्। तस्मात्सूत्राद्वृत्तिरेव न्याय्येत्याहुः। तत्र सा-
मीप्यस्य षष्ठ्यर्थत्वे षष्ठीति च समासविधायके सति कः
क्लेश इति तावच्चिन्तनीयम्। न च सामीप्यस्य षष्ठ्याऽबो-
धात्तत्र षष्ठ्यभावः क्लेशः। गङ्गायास्तीरमित्यादौ षष्ठ्या
सामीप्यप्रतीतेः। समर्थसूत्रे च देवदत्तस्य गुरुपुत्र इत्यत्र
सापेक्षत्वात्समासाभावमाशङ्क्य प्रधानस्य पुत्रस्य देवद-
त्तसम्बन्धसापेक्षत्वं न तु गुरोरित्युत्तरिते बाधकत्वेनोप-
न्यस्तस्य तथा सति गुरुपुत्रो देवदत्तस्य किञ्चिदिति
बुध्येतेति भाष्यस्य कैयटेन सामीप्यादेरपि प्रतिपत्तिप्र-
सङ्ग इति व्याख्यानात्। षष्ठी स्थानेयोगेति सूत्रे ऽस्तेर्भूरस्तेः

स्थानेऽनन्तरे समीपे इति सामीप्यस्यापि षष्ठ्यर्थ भाष्योदाहरणाच्च । एतेन व्यस्तप्रयोगस्यानिष्टत्वं प्र क्तम् । कथं तर्हि ब्राह्मणस्य कम्बल इत्यादौ न ब्राह्म समीपवर्त्यन्यदीयकम्बलप्रतीतिः । तत्र तात्पर्यज्ञानाभ वात् । सति च तस्मिन्निष्टापत्तेः । न च सामीप्यषष्ठ समासाभावोऽनन्तरादिषु समासाभावस्याकरसिद्धत् इति कथम् इति वाच्यम् । अनन्तरादिषु बहुव्रीहेरेवा भिधानेनाभावात् । एतच्चतस्य लोप इति सूत्रे कैय मतुप्सूत्रे च भाष्ये स्पष्टम् । अत एव गङ्गातीरमि षष्ठीसमासप्रयोगः सर्वजनसिद्धः । यच्च संयोगान्तलो दुर्लभ इति । तन्न यणः प्रतिषेधारम्भात् । न वा झर लोपात् । बहिरङ्गलक्षणत्वादिति लाघवोपष्टम्भस्य बहि रङ्गपक्षस्य च परमुपन्यासेन प्राबल्यानुमानात् । प्रकृ च बहिरङ्गत्वाभावात् संयोगान्तलोपे बाधकाभावात् अत एवात्र सूत्रे लकारश्चेति वक्तव्यमिति न विभक्तौ सूत्र स्थं च लुप्तनिर्दिष्टो यकार इति भाष्यं कैयटेन संयो गान्तलोपपरत्वेन व्याख्यातम् । अत एव उरण्सूत्रे च ण्ग्रहणप्रयोजनकथनावसरे आनङोऽपि रपरत्वं स्या दित्यर्थकं होतापोताराविति भाष्यमुपादाय रेफस्य स योगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यादिति कैयटः सङ्गच्छते । अत एव कर्मवत्सूत्रे व्यत्ययो बहुल

ल्लिङ्क्षाभिष्यङिति अकारेखपञ्च द्वितीयलकारं प्रश्लिष्य तस्य संयोगान्तलोप इत्युक्तं सङ्गच्छते । यदपि द्वन्द्वो दुर्लभः सहविवक्षाया असम्भवादिति। तत्रेदमालोचनीयम् । पाणिनिना स्वसङ्केतितानामणादिशब्दानां सङ्केतलघुनोपायेन बोद्धारः प्रतिपद्यन्तामित्यादिरन्त्येनेति सूत्रं प्रणीतम्। तत्रानेन सूत्रेण लक्षेत्संज्ञायां हल्पदसङ्केतग्रहस्तस्मिंश्च सति अनेनेत्संज्ञाग्रह इति बोद्धृन् प्रति अन्योन्याश्रयो न वक्तारं प्रति विवक्षा च वक्तुः सा चास्मात् पदादमुमर्थमयं जानात्वितीच्छा तथा चादिरन्त्येनेति सूत्रव्यापारात् प्रागपि हल्पदसङ्केतविषयानर्थान् पाणिनिर्जानात्येवेति कथं सह विवक्षाया असम्भवः। न चैवमपि द्वन्द्वघटकहल्पदार्थज्ञानाभावाद् द्वन्द्वार्थज्ञानाभावे द्वन्द्वार्थशाब्दबोधोऽपि कथं बोद्धृणामिति वाच्यम् । तथापि सहविवक्षासम्भवस्यानुपपादनात् । द्वन्द्वघटकहल्पदार्थज्ञानात् पूर्वं लकारेत्संज्ञाने हल्पदार्थप्रसिद्धौ क्रमेण द्वन्द्वार्थबोधसंभवाच्च । न हि समासघटकैकपदार्थाज्ञाने तद्घटकपदार्थान्तरस्यापि न शाब्दबोध इति नियमः । मुखनयनं पश्येत्युक्तौ मुखपदार्थमजानतोऽपि नयनं पश्येति प्रतीतेरानुभविकत्वात् । न च सह विवक्षायां द्वन्द्वविधानात् सहितबोधस्यैव वक्तृतात्पर्यविषयत्वेन कथं

केवललकारबोधः पूर्वमिति वाच्यम् । शाब्द-सामान्ये तात्पर्यज्ञानस्याकारणत्वेन तदविषयेऽपि केवललकारबोधे बाधकाभावात् । कारणत्वेऽप्येकदेश-तात्पर्यज्ञानात् प्रथमबोधेन हल्पदार्थप्रसिद्धौ चरमं तात्पर्यविषयबोधसम्भवात् । न हि यादृशं वक्तुस्तात्पर्यं तादृशतात्पर्यबोधमादायैव दोषपरिहार इति नियमः । अत एव हल्प्रत्याहारसिद्धेः प्राक् संयोगसञ्ज्ञाया असिद्धौ कथं संयोगान्तलोप इत्याशङ्कायां हलोऽनन्तरा इति सूत्रे हल्प्रत्याहारसिद्धेः प्रागनन्तरा हकारलकाराः संयोग इति वाक्यार्थबोधानन्तरं लकारपदस्य संयोगसञ्ज्ञायां तदन्तलोपेन लकारस्येत्सञ्ज्ञायां हल्प्रत्याहारसिद्धौ वास्तवार्थबोध इति कैश्चित् समाहितम् । आशङ्का चेयमतिस्थूलदृशः । न हि संयोगान्तलोपलक्षणानुसन्धानाभावे लुप्तलकारार्थतदनुकार्यलकारानुसन्धानं न सम्भवति । लौकिकव्युत्पत्त्यैव तत्सम्भवात् । अन्यथा क्विब्लोपलक्षणमजानतोऽग्निचिदित्यतः क्विबर्थबोधो न स्यात् । कथमन्यथा सुप्प्रत्याहारसापेक्षलक्षणविहितो द्वन्द्वो हल्पदावृत्तिपक्षे षष्ठीतत्पुरुषश्च तव मते सङ्गच्छेत । प्रकृते लकारबोधपूर्वकद्वन्द्वार्थबोधतात्पर्यकल्पने बाधकाभावाच्चेत्यलम् । एवञ्चान्योन्याश्रयपरिहाराय हलन्त्यमिति सूत्रमावर्त्य वाक्यद्वयं प्रकल्प्य हल्सूत्रे-

ऽन्त्यमित्यर्थकेनैकेन वाक्येन लकारेत्सञ्ज्ञायां हल्स-ञ्ज्ञासिद्धौ द्वितीयं वाक्यं णकारादीनामित्सञ्ज्ञार्थमिति तेषामुक्तिर्गौरवपराहतेति प्रक्रियाकौमुदीप्रकाश एव स्फुटमिति ॥

## उपदेशे ।

उपदेश इति करणे बाहुलकाल्ल्युडभावे घञि ति भाष्यकारादयः । अन्नाद्योच्चारणमुपदेशः । भावे घञ् । भाष्यादिषु करणे घञिति तु प्रौढि-वाद इति केचित् । तन्न । भाष्यकारैः करणघ-ञन्तस्योपदेशशब्दस्य लोकेऽपि साधुत्वस्वीकारात् । तदनुरोधेन करणे घञोऽवश्यस्वीकर्तव्यत्वात् । न च सौत्रस्यैवोपदेशशब्दस्य साधुत्वं भाष्यसम्मतं न तु लौकिकस्यापीति वाच्यम् । तथा सति सौत्रत्वेन परि-हारसम्भवे कृत्यल्युटो बहुलमिति बाहुलकस्वीकारा-नुपपत्तेः। सर्वार्थत्वे बाहुलकस्य सम्भवति सौत्रमात्रविष-यकत्वेन सङ्कोचे मानाभावाच्च । अत एव एओङ्सूत्रे सन्ध्यक्षरेषु तपरोपदेशस्तत्परोच्चारणमिति वार्त्तिके उपदेशशब्द उपदेशप्रयोजने करणव्युत्पत्त्या प्रयुक्तः । कौस्तुभे स्वयं व्याख्यातश्चेति । यत्तु प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिः पराहता । परत्वेन ल्युटा

रणाप्रयोजनं दुर्लभं धात्वादीनामनुबन्धरहिता
धात्वादित्वात् । उपदेशकाल एवानुबन्धानामि
लोपात् । अत एव न धातुलोपसूत्रस्थभाष्ये
टयोरविरोध इति वाच्यम् । अत्र धात्वादिपदे
बन्धसहितानां धातुपाठपठितानां ग्रहणात् । ते
वोपदेशत्वात् । तैरेव हि प्रयोगस्था धात्वादय उ
श्यन्ते । अत एव हलन्त्यसूत्रे धात्वादीनामन्त्यं ह
दित्यर्थकभाष्यस्थधातुपदमप्येवम्परत्वेन व्याख्येयमि
न काऽप्यनुपपत्तिः । यत्तु व्याख्यातग्रन्थदूषणं धात्वा
ष्वित्यादि सोऽयमनुक्तोपालम्भः । तत्र हि न पूर्व
हृतधात्वादिष्वेव करणव्युत्पत्तिकथनं किन्त्वागमा
पि । अत एव करणसाधनव्युत्पत्त्याऽज्ञातस्वरूपज्ञाप
राणां शास्त्रवाक्यानामुपदेशत्वमिति । शास्त्रवाक्य
शास्त्रसम्बन्धिवचनानामिति कुणादिवचनसाधारण
तम् । सर्वानुदाहृत्य एते च कर्मव्युत्पत्त्योपदेशा इ
कथने एतच्छब्देन सर्वेषां धात्वादीनामुपादानम् । च
रः कर्मव्युत्पत्त्येत्यत्र सम्बन्धेन करणव्युत्पत्तेः समुच्चा
इति सर्वत्र व्युत्पत्तिद्वयस्य तदभिप्रेतत्वात् । उपदे
ताप्रयोजकेत्यस्योपदेशतापर्याप्त्यधिकरणतावच्छेदके
त्यर्थः । अत एवोपदेशत्वं यावति पर्याप्तं तत्रेत्युपदेश इ
त्याम्नायोपदेशतेत्यादिसमुदितवाक्यार्थं उक्त इ

स्वग्रन्थविरोधोऽप्यपास्त इति दिक् । यत्तु प्रतिज्ञासम्-धिगम्ये प्रतिज्ञाशब्दस्य लक्षणेति क्लिष्टं व्याख्यानमिति तन्न । भावाकर्तृकारकविहितस्याङो लाघवाज्ज्ञाने शक्तिरन्यत्र लक्षणेति तद्व्याख्यानभावात् क्लेशाभावात् । न हि तस्मिन्नर्थे विधानमात्रेण तत्र शक्तिः क्षद्यो-गषष्ठ्याः कर्तृकर्मणोर्विधानेऽपि प्रचुरप्रयोगेण सम्ब-न्धमात्रशक्तायाः कर्तृकर्मणोर्लक्षणास्वीकारादिति । यत्र । यत्तु अमन्ताड्ड इति । अमि अमन्तेष्वनिडेक इष्यत इति च अम् वार्त्तिककृता व्यवहृत इत्याहुस्तद्-भसाभिधानम् । आद्यस्योणादिसूत्रत्वात् । द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वादित्याहुः । तन्न । अम् वार्त्ति-ककृता व्यवहृत इति तैरनभिधानात् । चय् अम् वार्त्तिककृद्दृष्ट्या न तु सूत्रकृत्संमत इति हि तेषामभि-धानम् । तत्र वार्त्तिककृद्व्याघ्रभूत्युणादिकृतोरप्युपल-क्षणम् । सूत्रं चाष्टाध्यायीस्थं तत्कारणञ्च विशेषणम् । तेनोणादेः सूत्रत्वेऽपि अष्टाध्यायीकर्तृकणादिकर्तृत्वेऽपि न क्षतिः । तथा चाष्टाध्यायीव्यवहृतानामेकचत्वारिंशत्वा-भिधानमिति फलितमिति दिक् ॥

## तुल्यास्य ।

स्थाननिरूपणे अमङ्णनानां नासिका चेति केचित् ।

तन्न । तेषां नासिकास्थानत्वे मानाभावात् । अनु
स्वयमानां नासिकास्थानमुच्यत इति पाणिनिशिक्षा
यमानुस्वारयोरेव ग्रहणात् । नासिकाव्यापारम
तत्स्थानत्वेऽनुनासिकाकारादीनामपि नासिकास्था
प्रसज्येतेति तदकथने न्यूनता । किञ्चैवं सति तु
स्यमित्यत्र किञ्चित्स्थानसाम्ये आश्रीयमाणे अभव
नानां स्पृष्टप्रयत्नानां परस्परं सावर्ण्यं स्यात् । तथ
त्वन्नयसीत्यादावनुस्वारस्य परसवर्णो वा पदान्त
त्यनुस्वारान्तरतमा ङकारादयोऽपि स्युः । सर्वस्थान
स्याश्रयणे कङादीनामपि सावर्ण्यं न स्यादिति त्व
रोषित्यादौ ङकाराद्यप्रसङ्ग इति । न च सवर्ण
सञ्ज्ञायां तुल्यास्यप्रयत्नत्वमन्यूनास्यप्रयत्नत्वम् । तथा
यद्यस्यान्यूनास्यप्रयत्नं तत्तस्य सवर्णमिति सवर्ण
सञ्ज्ञासूत्रार्थः । एवञ्च ङकारादीनां नकारन्यूनस्थान
त्वन्नयसीत्यादौ नातिप्रसङ्गः । ककाराद्यन्यूनस्थानत्व
त्वङ्करोषीत्यादौ नाप्रसङ्गः । परस्परान्यूनस्थानप्रय
त्वस्य सवर्णसञ्ज्ञायामनपेक्षणात् ककारादीनां ङका
राद्यन्यूनस्थानत्वाभावेऽपि क्षतिविरहादिति वाच्यम् । त
सति वकारस्य लकारसावर्ण्यं स्यादिति तोर्लीति
लकारस्थाणत्वेन वकारग्रहणप्रसक्तौ तद्वान्त्वित्यादौ त
र्गस्य वकारसवर्णापत्तेः । रलो व्युपधादित्यत्र रलूनि

ट्लकारेण वग्रहणाद्दिष्टे विषतीत्यत्रापि सन: किन्त्वा-
पत्तेः । तंल्लोकमित्यादावनुस्वारस्य ययीत्यनुस्वारस्य
ऽसवर्णानुनासिकवकारापत्तेश्च । न च शिक्षायां
न्तोष्ठस्य द्वन्द्वेन निर्देशात् समुदितस्य वकारस्यानत्वं
तु प्रत्येकमिति दन्तस्थानत्वाभावादस्य न लसावर्ण्यं
ङ्कारस्य तु पृथक्कण्ठनासिकास्थानत्वं निर्दिष्टमिति
ण्ठस्थानाद्भवति कसावर्ण्यम् । अत एव धात्वादे-
रिति सूत्रेऽज्दन्त्यपरा इत्यत्र ष्विदादयः पृथङ्निर्दिष्टाः ।
न्यथा दन्त्यपरसादित्वेन तेषामपि संग्रहेण तेन पृथङ्नि-
र्दिश्येरन्निति वाच्यम् । तथा सत्यदुह्वहीत्यत्र लुग्वा दुहेति
लुको वुनूर्षत इत्यत्र उदोष्ठ्यपूर्वस्येत्युकारस्य चाना-
त्तेः । अज्दन्त्यपरा इत्यत्र च दन्त्यग्रहणेन वकारो
गृह्येतेत्याशङ्का स्यादिति ष्विदादयो भेदेन निर्दि-
इति कैयटेनाशङ्कामात्रविषयत्वेन पृथङ्निर्देशस्या-
धानादिति । अन्यैरपि पृथक् ष्विदादिग्रहणादिह
त्यशब्दः केवलदन्त्यपरत्वेन ष्विदादिनां नेत्यभिद-
ङ्गिरन्यत्र दन्त्यग्रहणे वकारग्रहणं सूचितम् । किञ्च ।
डं रथेनेत्यत्रानुस्वारस्य परसवर्णाभावायानुस्वारस्य
ीत्यत्र जातिपक्षमाश्रित्य स्थानेऽन्तरतमपरिभाषयैक-
श्यतया ऽनुस्वारान्तरतमः परसवर्णो भवतीति वा-
र्यं आश्रितः । तथा च आदीनां नासिकास्थानत्वे

तेषामेवानुस्वारान्तरतमत्वेन त्वङ्करोषीत्यादावनुस्व
रस्य ङादिसिद्धावपि संवत्सर इत्यादौ वकारो न सिध्ये
दिति ॥

## पूर्वत्रासिद्धम् ।

अत्र सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद
विहितमसिद्धमिति प्रक्रियोक्तौ मनोरथ इत्यादि
सिध्येदिति केचित् । तन्न । प्रक्रियोक्तेर्हि कार्यं प्र
कार्ये कर्तव्ये ऽसिद्धं पूर्वमेव न जातमित्यर्थः । शास्त्रा
सिद्धत्वेऽप्ययमेव फलितोऽर्थः । तदुक्तं कैय्यटेन । यच्छास्त्र
मुच्चारितं तस्यासिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनाति
देश आश्रीयत इति । तथा चातिदेशेन कार्याप्रवर्त्त
त्वरूपोऽसिद्धधर्मः शास्त्रे ऽतिदिश्यमानः कार्यासिद्ध
एव फलति। एवं च मनोरथ इत्यत्रोत्वे कर्तव्ये रुलोप
पूर्वमेवाप्रवृत्तौ रोरुत्वस्याप्रतीघातान्मनोरथसिद्धिरप्रत्यू
ति। ऋलृवर्णयोरित्यत्र ऋ च ऋ च रलौ तौ च तौ वर्ण
चेति कैश्चिद्गृहीतम्। तत्र ऋलोरन्तरङ्गत्वेन प्रथमं
दीर्घत्वे राविति स्यात्। ऋत्यक इति प्रकृतिभावे ऋट
लाविति स्यादिति रलावित्यनुक्तिसम्भवमिति । न
वार्णादाङ्गं बलीय इति पूर्वमतो ङीति गुणस्ततो य
रलाविति सेत्स्यतीति वाच्यम् । आङ्गवार्णयोर्युगप

प्रवृत्तौ स्वाङ्गं बलवद्यथा कारक इति । प्रकृते च विभ-
क्त्युत्पत्तेः पूर्वं गुणप्रवृत्तावन्तरङ्गत्वात् सवर्णदीर्घप्र-
वृत्तौ बाधकाभावात् । न चान्तरङ्गपरिभाषाबाधिकया
ऽकृतव्यूहपरिभाषया गुणप्रवृत्तौ दीर्घाप्रवृत्तिरिति
वाच्यम् । यत्र बहिरङ्गेणान्तरङ्गस्य निमित्तविघातो
न त्वन्तरङ्गेण बहिरङ्गस्य तत्राकृतव्यूहपरिभाषाप्रवर्त-
नात् । पेचुष इति यथा । प्रकृते चान्तरङ्गेण दीर्घेण
बहिरङ्गस्य गुणस्य ह्रस्वऋकाररूपनिमित्तविघातेनाकृ-
तव्यूहपरिभाषाया अप्रवर्तनात् । किञ्चेदृशस्थलेऽन्तरङ्गेण
बहिरङ्गनिमित्ताविघातेऽपि अकृतव्यूहपरिभाषा न प्रव-
र्तत इत्यवश्यमभ्युपेतव्यम् । अन्यथा जनसनेति विटि
विड्नोरिति नकारस्याकारेऽन्तरङ्गत्वात् सवर्णदीर्घे
आतो धातोरित्याकारलोप इति प्रक्रियया पशुष इत्या-
दि न सिध्येत् । अतो लोपे भाविनि सवर्णदीर्घस्यान्त-
रङ्गस्याप्रवृत्तेः । अभ्युपगतञ्च पशुष इति रूपमसिद्धव-
त्सूत्रे भाष्ये इति चिन्त्यम् । अथ ऋल्ल अस्यामेवावस्थाया-
मृत्यक इति प्रवृत्तावपि ऋतो ङीति गुणे ऋत्परत्वाभा-
वात् प्रकृतिभावाभावे यणा यथोक्तसिद्धिः । न चेकोसवर्णे
इति प्रकृतिभावः । समासे तन्निषेधात् । वैकल्पिक-
त्वेन पक्षे तस्याप्रवृत्तेश्चेति चेन्न । अचः परस्मिन्निति
गुणस्य स्थानिवद्भावेन ऋत्परत्वात् प्रकृतिभावतादव-

वत्त्वात् । न च पदान्तविधिः कार्यान्तराभावपर्यवसा
यिनः प्रकृतिभावस्य पदानवयवत्वात् । यदपि उञ्
ऊँ च रलोरिति विगृहीतम् । तदपि चिन्त्यम् । ओर
न्ततोऽङीति गुणनिमित्तत्वादिति दिक् ॥

इति सञ्ज्ञाप्रकरणम् ।

# इको गुणवृद्धी ।

इह भाष्यादावनुक्तोऽपि नियमपक्षः सुसाधस्तच्छे
षपक्षाद्विशिष्यते इति निरूपितं प्रक्रियाप्रदीपेऽस्माभिः
तथाहि एतत्परिभाषाया अलोऽन्त्यशेषत्वे मिदेर्गुण
पुगन्तलघूपधस्य च मृजेर्वृद्धिरित्यादौ दोषमुद्भाव्य मि
दुर्मिदिः पुक्यन्तः पुगन्तः लध्वी उपधा लघूपधा तद
समाहारद्वन्द्वः । मृजेर्वृद्धिरित्यचाचोऽञ्णितीत्य
इत्यपकृष्यत इति प्रकृतिपरिभाषानुपस्थानेऽपि स्थान्युपा
दानादेवेष्टस्याऽनिलाभो भाष्यकृतैवोक्तो नियमपक्षेऽप्यु
न्नेयः । किन्त्वेवं सति क्ङिति चेत्यत्र लैगवायनादावति
प्रसङ्गाभावाय चस्येत्यर्थकत्वेन इक इति विहितयोर्गु
णवृध्योर्निषेध इत्यर्थाल्लघूपधगुणस्येक इत्यविहित
त्वाद्भिन्न इत्यादौ निषेधायोगात्तच्छेषपक्षे गुणो दुर्वार
नियमपक्षे तु कणड्गीत्यादावनिकोऽपि लघ्व्या उपधाया
सत्त्वात् तत्सत्त्वाधिक इति नियमितो लघूपधगुण इति

न्निषेधः सुलभ इति । एतेन नियमपक्षमनूद्य तच्छेष-
क्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थित-
त्वात् तच्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्प-
ीकृतोऽस्माभिरिति परेषां रिक्तं वच इत्यवगन्तव्यम् ॥

मिदचोऽन्त्यात्—।

अत्र सूत्रेऽन्त्यादचः परो मिदिति प्राचोक्तवृत्तौ
ाच इति निर्द्धारणे षष्ठी न तु पञ्चमी जातौ चैकव-
नम् । तथा चाचां मध्येऽन्त्यादित्यर्थः । तेनाच इति
तावन्त्यादिति समानाधिकरणा पञ्चमीत्यभिमानेन
सुचादीनामित्यादावप्यत्यभिधानं प्रत्युक्तम् ।
त्वभक्तत्वे त्रपूणीत्यत्र दीर्घो न स्यादित्यनूद्य तत्तदा-
ग्रहणं स्यादिनुमर्थमिति वार्त्तिकेनैव दूषितप्राय-
ति व्याख्यातृवचनत्वाम् । तन्न परादित्वे वहंलिह
यादावनुस्वारादि स्यादत एवाभक्तत्वपक्षोऽप्युपे-
: । त्रपूणीत्यादावानन्तर्यादङ्गस्य दीर्घप्रसङ्गश्चेति
ाख्यातृग्रन्थस्त च परादित्वदूषणेनाप्युपपत्तेरुक्त-
षनिरासादि । यस्यादेः परस्येति सूत्रं विवृण्वता
वापञ्चमीनिर्देशेनेत्याद्युक्तं तदसम्बद्धमिति केचित् ।
परत्वानुवादेन यस्य यत् कार्यं तत्तस्यादेरित्येव
ार्थः परत्वानुवादश्चोत्परस्यात इत्येतद्विषयो न ।

त्वात इति स्थानिनिर्देशात् । किन्तु तस्मादित्यु
त्तरस्येति परिभाषोपस्थितोत्तरत्वविषय इति स्पष्ट
मिपलथे पञ्चमीनिर्देशेनेत्यादि प्राचो वचनं कथम
स्वङ्गमिति तच्चिन्त्यम् ॥

इति परिभाषाप्रकरणम् ।

## इको यणचि ।

यत्तु इक्यणोर्यथासंख्यत्वाभावोपपादनाय षट
ष्टिरिको यणः सन्त आन्तरतम्येन सवर्णग्राहकत्वे
गुणानामभेदकत्वेनानुनासिकानामपि यवलानां प्र
सादिति । तत्र गुणानामभेदकत्वपक्षे कथं सन्त
अनुनासिकयवलग्रहणं हेतुरिति चिन्त्यम् । इग्यणो
यासङ्ख्यत्वोपपादनं यथासङ्ख्यसूत्रोपन्यासप्रयोजना
गादीनां दीर्घाद्युपस्थानोपायश्च प्रक्रियाप्रदीपाद
सेय इति ॥

## अनचि च ।

अत्र वा द्वे इत्यनुवृत्त्यैव सिद्धे त्रिप्रभृतिष्वति त्रिस
ध्यर्थेति केचित् । तत्र दीर्घादाचार्याणामित्यस्य नि
त्वात् कथं वैयर्थ्यम् । न चाचार्यग्रहणेनास्यवैकलि
कत्वम् । तस्य पूजार्थत्वात् । अत एव नादिनीत्य
नचिचेति मरीचीत्यत्राचो रहाभ्यामिति प्राप्तिः का
कायामुक्ता । त्रिप्रभृतिष्वति सूत्रद्वये द्वित्वप्राप्

मनुद्भाव्य दीर्घादाचार्याणामित्यत्र अनचि चेति प्राप्ति र्हरदत्तेनोद्भाविता । तस्य ह्ययमाशय उन्नीयते । त्रिप्रभृतिष्विति सूत्रद्वयं वैकल्पिकनिषेधविधायकम् । तत्र प्राप्त्युद्भावनं नावश्यकम् । विकल्पस्याप्राप्तविषयस्यापि सम्भवात् । नित्यनिषेधे तु तदुद्भावनमावश्यकमिति । एवञ्च त्रिप्रभृतिष्विति सूत्रमावश्यकम् । अन्यथा राष्ट्रमित्यादौ दीर्घात् परस्य द्वित्वं न स्यात् । न चासत इत्यत्र माधवेन द्वित्वकरणात् कथमिदमिति वाच्यम् । तस्य माधवग्रन्थस्यात एव प्रकाशे दूषितत्वात् । आत्वा रयमित्यत्र प्रातिशाख्यभाष्ये द्वित्वमवर्त्तनं च छान्दसत्वेन निर्वाह्यम् । वाक्क वाक् इत्यत्र भाष्योदाहृतद्वित्वनिर्वाहस्य दीर्घादाचार्याणामित्यत्रानचीत्यस्य हलीत्यर्थकस्यानुवृत्तेरित्यादि प्रक्रियाकौमुदीप्रकाशादवसेयम् । एतेन दीर्घादाचार्याणामिति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक् वाक्क इति भाष्योदाहृतविकल्पे उपपत्तिचिन्तार्थं क्लेशो मुधैव । पूजार्थतायाः प्रामाणिकैरनुक्तेरित्यादि परास्तम् । यत्तु स्थानि वत्सूत्रे धात्वङ्गेत्याद्युदाहरणाव्ययस्याङ्गपदाभ्यां पृथगुपन्यासवैयर्थ्यदूषणोपन्यसनं तत् कौस्तुभे स्वयमेव गोबलीवर्दन्यायेन समाहितत्वादनादेयम् ॥

## संयोगान्त—।

यत्तु यत्त्वाहुर्वार्त्तिककृतो वचनं प्रत्याख्यान
रदूयन्तु भाष्यकृत इति तन्निर्मूलम् । मतभेदे प्रम
भावादिति । तन्न । भाष्ये तु संयोगान्तलोपे धुरो
ना स्तीति समर्थितमिति कातन्त्रपरिशिष्टो
मानत्वेन । धुडिति हि सत्यच्यते । यदपि
कलत्रं शाल्वं चाचक्षाणः काव् कलत् शाल् । अ
त्यनूद्य तत्र संयोगान्तलोपो दुर्लभः । आद्यपक्ष
कल्प्यार्थं पूर्वपूर्वमन्तरङ्गं परं बहिरङ्गमित्यत्र
लोपयोरसिद्धत्वात् । वन्तयोः क्विपि वकौ
प्रत्ययस्यानित्वादूठो दुर्वारत्वात् णिचि लोपी व्य
त्ययस्य प्रसङ्गाच्च । गिर्विश्मयतेस्तु क्विपि
प्रतिषेधार्थं वचनारम्भपक्षे गिर्वेडित्युचितम् । प्र
ख्यानपक्षे तु मान्तमेवेति । तदप्यसत् । स्कन्द
स्कन्नित्यादि न पदान्तसूत्रस्थकैयटेन कुस्मयतेः कु
बहिरङ्गापक्षाभिप्रायेण माधवेन च स्वग्रन्थेन विरो
त् पूर्वपूर्वमित्या द्युक्त्याहितत्वात् विचिकाव्यशब्द
णिचि संयोगान्तलोपस्यासिद्धत्वाद्यलोपेऽल्लोपादेः
नित्यत्वाभावे ऽपि शाल्वशब्दे तदभावाल्लोपो
रित्यस्यासम्भवाच्च । अत एव काव्यशाल्वशब्दयो
वक्ष्यात् तदत्र किन्तत्त्वमिति चिन्त्यमिति प्रकाश

द्भिरुक्तम् । वस्तुतो हलन्त्यमिति सूत्रोक्तभाष्यादिवरोधात् स्वयं गिरिवेडित्यत्र फलभेदस्वीकारेण च नेह लक्षणामैकरूप्यमित्युक्तक्लेशाश्रयणन्निर्मूलमेवेत्यास्तां तावत् । सुध्युपास्य इत्यत्र पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वेऽनुभयद्वित्वे च नव इति प्रक्रियाकौमुद्यां प्रकाशकृद्भिर्धस्य जश्त्वे दस्य द्वित्वं धस्यैवेत्युक्ताऽन्ते धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे अनुभयद्वित्वे च नव रूपाणि । तथा हि । एकधं त्रिधा । एकयं द्वियं त्रियं च । एवं द्विधं त्रिधं चेति । न चान्तरङ्गे द्वित्वे बहिरङ्गस्य यणोऽसिद्धत्वम् । त्रैपादिकेऽन्तरङ्गबहिरङ्गपरिभाषा न प्रवर्तत इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादित्युक्तम् । अत्र केचित् । एकस्यां व्यक्तावेकं लक्षणं सकृदेव प्रवर्तत इति एकः पूर्वपरयोरिति सूत्रे भाष्ये सिद्धान्तितत्वात् कथं पुनर्द्वित्वप्रवृत्तिरन्यथा द्वित्वानन्त्यापत्तेः । न च झरो झरीति हलो यमामिति च लोपेन निर्वाहस्तस्य वैकल्पिकत्वात् । किंत्वेवं सति सर्वस्य द्वे इति द्वित्वमपि पुनः पुनः प्रवर्तेत । अत एव लिटि धातोरिति सूत्रेऽनभ्यासग्रहणं भाष्ये प्रत्याख्यातम् । सन्नन्ताद्यङन्ताद्वा णिचि चङ् द्वित्वाभावार्थं तदिति कैयटादिभिरुक्तम् । प्रकाशोक्तप्रथमपक्षे तावन्न दोषः

पूर्वत्रासिद्धमद्वित्व इति जशोऽसिद्धत्वाभावाद्
दकारस्य द्वित्वमिति व्यक्तिभेदात् पुनर्द्वित्वप्र
सङ्ग संयन्तेत्यादौ परसवर्णे यकारद्वित्वे भाष्यकृ
सन्ताइत्यत्र टकारद्वित्वं रामादित्यत्र जश्त्वेवाऽप्य
चर्त्वे द्वित्वे च रूपचतुष्टयं भवतीदाहृतम् । त
च पूर्वत्रासिद्धीयमद्वित्व इत्युपन्यस्तम् । अपि:
भ्युपेत्य प्रवृत्तद्वित्वपक्षेऽस्याहुरिमिकद्विर्वचनस्य
द्विर्वचनत्वे स्थान्यादेशव्यक्त्योश्च भेदाद्धकार
स्य पुनः प्रवृत्तौ सत्यभावात् । एकः पूर्वपर
सूत्रे भाष्ये सकृत्प्रवृत्त्य भिधानं चानवधानवि
तत्राधानादिवासन्नदृष्टान्तेन क्वचिदेवैकस्मिन्न
अनुष्ठापकार्यं स्यान्न प्रयोगान्तर इत्याशङ्क्य
होमादिवासन्नदृष्टान्तेन प्रयोगान्तरेऽपि गुणा
नेरेव सिद्धान्तितत्वान्न तु सकृच्छास्त्रप्रवृत्तेः ।
न्त्यापत्तिरपि कृते न दोषः । स ह्यनन्तकार्य
प्रयोगस्याशक्यत्वाच्छास्त्रकर्तव्यस्य परिनिष्ठित
स्याभावात्तच्छास्त्रस्यानैराकाङ्क्ष्यापत्त्या दोषः ।
च सा नास्ति द्वित्वस्य वैकल्पिकत्वेन यावच्छा
त्वसहितप्रयोगस्य परिनिष्ठितत्वेन तेनैव शा
कृतार्थत्वात् । लिटि धातोरिति द्वित्वस्य तु
त्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां
वात् प्रथमप्रवृत्तावेव विश्रान्तिकल्पनादनधाव

ह्याख्यातम् । अत एव सर्वस्य द्वे इत्यस्यापि न
न: प्रवृत्ति: सकृत्प्रवृत्तेन द्वित्वेनाभीक्ष्ण्यादे बोधा-
च । अत एव परेर्वर्जन इति वैकल्पिकस्याऽपि न
न: प्रवृत्ति: । अयमत्र निष्कर्ष: । लक्षणस्य पुन:
वृत्त्यप्रवृत्त्योर्व्यक्तिभेदाभेदावतन्त्रौ किन्तु सकृल्लक्षणे
वृत्ते निमित्ताभावात् पुनरप्रवृत्ति: । क्वचिदानन्तर्या-
क्वचिल्लक्ष्यानुरोधेन वच्यादौ प्रथमपुरुषबहुवचना-
ह्शास्त्रसंकोचस्यैव तत्र तत्र लक्षणस्यासकृत्प्रवृत्ति-
ति सङ्कोचस्य च कल्पनात् यथासुष्पुपास्य इत्यादा-
प्रको यणचीत्यादे: पुनरप्रवृत्ति । रमाया इत्यादौ याट्
ास्त्वादे: । आधोढुमित्यत्र त्वादीनामसिद्धत्वाद्धल
नवृद्धौ ढादौ सहिवहोरित्यकारे च कृते प्रसक्तस्या-
पि हलन्तवृद्धिशास्त्रस्य प्रकृते तूत्सर्गत: प्रवृत्त-
य द्वित्वशास्त्रस्य पुन: प्रवृत्तौ न किञ्चिद्बाधकम् ।
त एवाऽसिद्धवत्सत्रे नुटो यत्नि सिद्धत्वविधायक-
ार्तिकप्रत्याख्यानाय नुड्विधानसामर्थ्यं वर्णयितुं न
यञ्जनपरस्यैकस्यानेकस्य वा श्रुतौ विशेषोऽस्तीति
ाष्यकृतोक्ते: । श्रुतिभेदपक्षेपि परत्वो मय इति द्विर्व-
नाद्धलो यमामिति पक्षे यलोपविधानात् पक्षे यका-
द्वयं भवत्येवेति नार्थो नुटेति । तद्विधानसामर्थ्या-
ग्रहण भवतीति कैयट: । इदञ्च द्वित्वस्य पुन:

प्रवृत्तावेव सङ्गच्छते। अन्यथा युट्पक्षे द्वित्वे त्रिय
रूपं तदभावे द्वियकारमिति कथं श्रुतिभेदपक्षे
विधानसामर्थ्यं पुन प्रवृत्तौ तु युडभावेपि पुनर्द्वि
वृत्त्या त्रियकारमिति सामर्थ्यसङ्गतिरिति। प्र
नवत्वोक्तिस्तु मूलकृदुदाहृतद्वित्वद्वयानुसारेणेति
पल्लवितेन। यच्च। यदप्युक्तं त्रैपादिक इत्यादि
तदपि न। नाकुटौ नार्पत्य इत्यत्र विसर्गनिवार
वृद्धेरसिद्धत्वस्य भाष्ये स्पष्टत्वादिति। तन्न। ना
इत्यादौ विसर्गनिवृत्तेर्बहिरङ्गपरिभाषानिराकरणपू
वचनेनैव सिद्धिरिति पाक्षिकभाष्यार्थस्य कैय्य
करणात्तत्परेणास्य ग्रन्थस्योपपत्तेः। त्रैपा
दत्वस्य क्वाचित्कत्वे पादिकपरत्वेन बहिरङ्गत्वेन य
प्रतिषेध इत्यस्य प्रत्याख्यानस्य सुवचत्वाद्दिति। य
कृष्णर्द्धिरित्यत्र त्रिधादिरूपवचनं ऋद्धेर्धकारस्य
त्वमिति। तद् झलाञ्जशीति जशोऽप्रतिहृतप्रसरत्व
दुक्तन्यायेन जशः सिद्धत्वाच्चायुक्तम्॥

झरो झरि—।

यत्तु प्राची विकल्पानुवृत्तेरनुक्तेर्न्यूनतेति त
मूलन्यूनतापरिहाराय तद्व्याख्यानेऽन्यतरस्यामित
नुवर्तितत्वात्। कथमन्यथा गुरोरनृत इत्य

देवदत्त इत्यत्र भवदुदाहरणे व्याख्याने ऽस्य एहीत्यादि-
पूरणेऽपि मूले वाक्यानुदाहरणान्न न्यूनता। एवमेव दूरा-
द्धूते चेति सूत्रे प्राचोक्तं कृष्ण एहीत्युदाहरणमपि प्रसी-
देत्यादिपूरणेन व्याख्येयम्। यच्च यदपि व्याख्यातृभिः शरो-
ऽचीति ज्ञापकमुपन्यस्य तत्संवादार्थं भाष्यमुपन्यस्तम्। अ-
नुवर्तते हि विभाषा शरोऽचि यद् वारयत्ययं द्वित्वमिति
तन्न। तदुत्तरभाष्ये एवोक्तज्ञापकस्य दूषितत्वात्। लोपस्य
हि नित्यत्वेऽचोरहाभ्यामिति द्वित्वं लोपापवादः स्यात्
तथा च शरोऽचीत्यस्य सार्थक्यं स्पष्टमेवेत्यादि। तत्र ज्ञा-
पकमुपन्यस्येत्यनुक्तोपालम्भः। इत्थं हि तेषां ग्रन्थः।
विकल्पेनायं लोप इति काशिकादौ स्थितम्। तथा
च भाष्यम्। अनुवर्तते इत्यादि। तथा च लोपस्य वैक-
ल्पिकत्व एव भाष्यसंवादस्तेषामभिप्रेतो न तु शरो-
ऽचीत्यस्य ज्ञापकत्वेऽपि तद्वाक्यनिविष्टत्वेन परं तल्लेखः।
अत एव कैयटोऽपि लोपो विकल्पेनेत्याहेति लोपस्य
वैकल्पिकत्वमात्रांश एव कैयटसंवादस्तैरुपन्यस्तः।
यत्तु द्वित्वविधानाद्द्वावेव शिष्यत इत्यत्र लोपस्य वैक-
ल्पिकत्वेन द्वित्वस्य चरितार्थत्वादिति दूषणं तत् तदाश-
यानवबोधात्। अचो रहाभ्यामिति द्वित्वे द्वयोः श्रवणं
न स्याल्लोपेनैकस्यापहारादित्याशङ्कायां द्वित्वविधाना-
दिति ग्रन्थस्तदर्थश्च द्वित्वविधानसामर्थ्याल्लोपस्य वैक-

त्पिकत्वात् पक्षे द्वयोः श्रवणमिति द्वित्वविधानं लो
वैकल्पिकज्ञानद्वारा द्वयोरेव श्रेषे हेतुरिति तदा
इति । प्राडूहोढो । अत्र क्तान्तस्योढशब्दस्यार्थ
ग्रहणं ज्ञापकमर्थवद्ग्रहणेनानर्थकस्येत्यत्रेति सीर
वः । यत्तु नन्वेतदयुक्तम् । फणादिना राजिना सा
चर्यात्तस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादि
त्येन । विभ्राट् विभ्रागिति हि रूपद्वयं साध्यम् ।
श्चादिसूत्रे राज् इति पठित्वाऽपि सुसाधमेकस्य भ्रा
तेरेकारस्य प्रागपि दातुं शक्यत्वात् । भ्राज
श्चेति विकल्पस्यात्मनेपदमात्रफलकतायाः वक्ष्यम
त्वेन तत्स्थानेऽकारस्य सुपठत्वाच्चेति । तत्राग्र
तावदतिनिर्दलः । अर्थवद्ग्रहणपरिभाषाभावे व्रश्च
सूत्रेऽफणादिभ्राज्येकादेशस्यापि राजेः सत्वेन फ
देरेव ग्रहणमिति नियामकाभावेन तत्साहचर्येण
णादिभ्राजिग्रहणार्थं भ्राजिग्रहणमित्यस्यानाशङ्क्य
त् । भ्राजेः फणादेरेव ग्रहणमिति नियमे
राजिग्रहणे फणादेर्ग्रहणासम्भवेन किन्तद्व्यावृत्तये
जिसाहचर्येण फणादेरेव भ्राजेर्ग्रहणार्थं भ्राजि
णेनेति । राजिसाहचर्यात् फणादेर्ग्रहणमित्याक
न्यासस्त्वर्थग्रहणपरिभाषायां स्थितायामिति न तद्
भः । एवं च सूत्रभातृन्यासभङ्गेन समाधानमपि निष

। किंच राजृ इति सानुबन्धकनिर्देशे यङ्लुकि राराज्यादौ षत्वं न स्यात् । किञ्चैवं भ्राजेर्ग्रहणं न स्यात्तस्य समुदायानुबन्धत्वादिति दिक् । यदप्युपसर्गेव धातोराक्षेपे सिद्धे इति प्रतीकमुपादाय तद्धेतुन व्याख्यायां यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्युक्तत्वादित्युपन्यसनं तदपि मुधा । उपसर्गाः क्रियायोग इति यथाश्रुतसूत्रादेव धातोराक्षेपसम्भवात् ।

## एङि पररूपम् ।

अत्र प्रेजतीति मूलोदाहरणमभिप्रेत्य एजृकम्पन इति प्रकाशः । कम्पनार्थस्यैजतेः परस्मैपदत्वादिति बोध्यम् । एवे च । अनियोगोऽवधारणभिन्ने सम्भावने तथा च ॥

अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः ।
एषस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत् ॥

इति श्लोकवार्त्तिकमिति प्रकाशः । तत्र वृत्तौ सर्वं वार्त्तिकम् । अध्यात्मादित्वाट्ठञ् बोध्यम् । तेन वार्त्तिकोक्तौ रभसादिति केषाञ्चिदुक्तिः सैव रभसिकोक्तिति ध्येयम् । यत्तु शकन्ध्वादिष्वित्यत्र टिसञ्ज्ञासूत्रोदाहरणम् । तट्टिसञ्ज्ञाप्रयुक्तकार्याभावादनुचितम् ।

अव्यक्तानु—।

अत्वतः किं इकारान्ते मा भूदिति प्राचो॰ प्रश्नोत्तरयोर्निरालम्बनत्वमिति । तत्रात इति ह्रस्वाकारनिर्देशः। अतो गुण इत्यत एव तदनु॰ त्तेरस्यानर्थक्यापत्तेः। नाम्रेडितस्येति ज्ञापकाच्च । त॰ राकारनिर्देशे आम्रेडितनिषेधोऽकारस्य स एवा॰ इति विकल्पोऽपि तस्यैव स्यादिति निषेधविकल्पयो॰ रेकविषयत्वापत्तिरिति तकारान्तनिर्देशो वाच्यः तत्र प्रतिपत्तिलाघवायात् इत्येव निर्देश्यमुदाहर॰ च कृत्वा जशोऽन्त इति जशि कृतेऽदःसम्भवात्। रो॰ त्वन्यायेन च जशोऽसिद्धत्वाभावादिति प्रश्नाशयः। उत्त॰ रस्य जश्त्वं विना अदकारान्तमनुकरणं तत्र म॰ भूदित्यर्थः। एवंच तत्र पररूपस्य चरितार्थत्वाद्रोरुत्वन्या॰ याभावेन जशोऽसिद्धत्वात्तकारान्ते न स्यादिति द्र॰ व्यम्। तपरस्तत्कालस्येत्यत्र इकारप्रश्लेषपक्षे त्वद् इ॰ निर्देशेऽपि ह्रस्वाकारपरत्वसम्भवात्तन्निवृत्तये उक्ता॰ न्यनुसन्धानावश्यकत्वे प्रतिपत्तिलाघवस्याभाव इत्या॰ द्रष्टव्यमिति कथं प्रश्नोत्तरयोर्निरालम्बनत्वमिति यदपि यत्तु व्याचख्युः। अतो गुण इत्यतोऽत इत्यनुवः शब्दाधिकारात् सिद्धमिति प्रश्नः। यद्वा जश्त्वबलाद्

वं तदापि स्यात् पुनरद्ग्रहणे तु तान्तत्वस्य विव-
न्नेत्युत्तरमिति । तच्चिन्त्यम् । जश्त्वशास्त्रस्या-
त्वेन पररूपस्यैव प्रवृत्तेः । नाम्रेडितस्येति निषेधे
पटदितीत्युदाहरणस्यासम्बद्धत्वापत्तेश्च । तत्र
भवदुक्तरीत्याप्राप्तिरेव नास्ति दान्तत्वादिति
पि न । जश्त्वशास्त्रस्यासिद्धत्वेऽपि पुन-
हणेन जश्त्वाविषय- तात्पर्येण पररूपाप्राप्तेः ।
एव व्याख्यातृभिरत इत्यनुवृत्तेऽपि यदा
शब्दस्य जश्त्ववशाद्दान्तत्वं तदापि स्याज्ज-
स्यासिद्धत्वाद्भवत्ययमच्छब्द इति प्राप्तो-
। पुनरद्ग्रहणेन त्वत इत्यस्य विशेषणास्ता-
त्वविवक्षायान्न भविष्यतीत्युक्तम् । तत्र दान्त-
त्यस्य सम्भाव्यत इति शेषः । अन्यथा दान्तत्वे
त्वासिद्धत्वोक्तिरसंभावविनी स्यात् । तान्तत्वस्य
क्षायादित्यस्य जश्त्वाविषय विवक्षायादित्यर्थः ।
था पुनरद्ग्रहणाभावेऽपि तान्तत्वविवक्षासम्भवा-
रद्ग्रहणेन तु इत्यसम्बद्धं स्यात् । अत एव हरद-
पि पटदितीत्यत्र पररूपमाशङ्क्य काशिकायाम-
क्तं दकारान्तानुकरणमेतदिति प्रतीकमुपादाय
रान्तानुकरणे रूपमेवैतन्न स्यादपदत्वे जश्त्वा-
त्वया पटिति करोतीत्याह । पटत्पटदित्यन्त्यप-
विकल्पे ऽभावोदाहरणम् । तत्र द्वितीयाद्ग्रहणा-
धङ्कत्यस्य व्याख्यातृभिरेवोक्तत्वात् । अन्त्यपर-

रूपनिषेधोदाहरणन्तु पटत्पटेतीति नाम्रेडि
तदूषणस्याप्ययुक्तकत्वात् । अत्रैकाचो नेत्यस्य अदि
ति कथमुदाहरणमिति तु चिन्त्यम् ॥

अकः—

अत्राकोऽकिदीर्घ इत्येव सुवचमिति केचित् । य
संख्यसम्बन्धेनैवासवर्णेऽयात् मितिरिति तेषां भाव
तच्चिन्त्यम् । तथा सति ऋति ऋ वेत्यादिवार्त्ति
स्वयमुपन्यस्ते दधि ऋकार इत्यादावतिप्रसङ्गवार
याधिकस्य सवर्णग्रहणस्य सूत्रे चाकीत्यस्य करणेऽ
गौरवात् ॥

सर्वत्र विभाषा गोः ॥

अवङ् स्फोटायन— ।

अत्र हे चित्रगो इत्यादाववङ्प्रकृतिभावयोरभाव
स्थानिवत्त्वनिषेधस्वीकारावश्यकत्वात् तेनैव चित्र
ग्वित्यादावपि तयोरप्रवृत्तौ यत् कैश्चिदेङ इ
तदर्थमनुवर्त्ति तन्निष्फलम् । न चैङनुवृत्तौ लाक्षणि
त्वाच्चित्रगो इत्येङस्तयोरप्रवृत्तौ स्थानिवत्त्वनिषे
नावश्यक इति वाच्यम् । आदेच इत्यत्र चेतेत्यादिल
क्षणिकस्यैचो वारणफलकस्योपदेशग्रहणस्य वर्णग्र
लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञापकत्वात्

अन्यथा चक्रे इत्यादिप्रतिपदोक्त एवैङः पदान्तादित्यादि प्रवर्तेत न हरे इत्यादौ । अन्यत्र स्वयमपि तथाभ्युपगमाच्च । न च गोः पूर्वस्य इति वार्त्तिके पूर्वरूप एव स्थानिवद्भावनिषेधस्योक्तत्वेन पूर्वरूपमेवानिष्टमिति प्रतीयते न त्ववङ्प्रकृतिभावाविति कथं तयोरप्रवृत्तये स्थानिवत्त्वनिषेध आवश्यक इति वाच्यम् । एवमप्येङनुवृत्तिप्रयोजनानुक्तेः । चित्रग्वग्रमिति वार्त्तिकोदाहरणे भाष्योक्ते एङः पदान्तादतीति पूर्वरूपस्याविधित्वेन तदप्रवृत्तये वार्त्तिकस्यासम्भवनीयत्वेन तत्पूर्वरूपपदस्य पूर्वरूपबाधकावङ्प्रकृतिभावपरत्वाच्च । न चैवमपि सर्वत्र विभाषेति सूत्रस्यैव भाष्ये उदाहरणात् प्रकृतिभावपरत्वे ऽपि पूर्वरूपस्यावङ्परत्वे किं मानमिति कुतोऽवङोऽनिष्टत्वमिति वाच्यम् । एवमप्येङनुवृत्तेर्निष्फलत्वस्यापरिहारात् । न चावङ्सूत्रे ऽवक्तव्यः स्वरसिद्ध्यर्थमिति वार्त्तिककृता गवाग्रमिति बहुव्रीहौ गोशब्दौकारस्योदात्तस्यावङ् कदाचिदन्तो दात्तोऽपि स्यादित्यगागमोऽवङ्समानरूपबाधक उक्तः भाष्ये च तत्प्रत्याख्यानायाद्युदात्तोऽवङ् निपात्यत इत्युक्तम् । एवं च चित्रग्वग्रमित्यत्रावङोरूपभेदात् स्वरसिद्धिमात्रस्यानुक्तिप्रयोजनोक्तिः कथं वार्त्तिककृतः सङ्गच्छताम् । कथं चाद्युदात्तनिपातन-

मात्रेणातःप्रत्याख्यानं भाष्यकृत इति तत्रावङोऽ
स्वात्तन्निवृत्तये ऽवङ्विधाने एङनुवृत्तिः। चित्रगं
भित्यत्र त्ववङ इष्यते किं बाधकमिति नावङि स्व
वरत्वनिषेध इति वाच्यम् । आद्युदात्तनिपात
समासान्तस्वरः साध्यः स चावङ्स्वीकारे न सिध्
शब्दामन्त्रितस्वरेणाद्युदात्तत्वादवङि गकाराव
शति शिष्टोदात्तत्वादिति स्वरभेदात् । न च गवा
त्यादावङ आद्युदात्तत्वस्य श्रवणं मा भूदिति तस्ये
शिवद्भावो वाच्य इति समासान्तोदात्तादिवाम
ताद्युदात्तादपि प्रागवङ्स्वरप्रवृत्तौ पश्चादामनि
स्वरे स्वरभेदाभाव इति वाच्यम् । उपदेशिवद्भ
हि समकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य
सस्वरस्य प्रागप्रवृत्तिः क्रियत इति कैयटादिभिर्व्या
तत्त्वात् समासान्तोदात्तत्वेन न बाध्यत इति
नोक्तेरन्तरङ्गाबाधेनोपपत्तौ तद्बाधकल्पनस्यान्य
त्वाच्च । अन्तरङ्गस्य प्रथमप्राप्तस्यामन्त्रितस्वरस्य
स्वरात् प्राक् प्रवृत्तौ बाधकाभावात् । तस्मादुक्तो
रणोऽवङ्प्रकृतिभावयोरनिष्टयोरभावः स्यान्निवत्त्व
षेधेनैव साध्य इति तद्विधाने एङनुवृत्तिर्निष्फ
अत एव माधवेन चित्रग्वग्रमित्यत्र स्यान्निवत्त्वाभ
नैव तयोरप्रवृत्तिरुक्तेत्यलम् । यच्चावङ्सूत्रे पद
किं गवीति प्रत्युदाहृत्य गवे इति प्रत्युदाह

प्रयुक्तं पररूपेणाप्येतत्सिद्धेरित्युक्तम् । तत्तदाशया-
ऽवबोधात् । न हि गवे इति ङयि सिद्धं रूपं तदा-
शयविषयः किन्तु ङावापाद्यम् । तथा च ङौ गवे
इति स्यादित्यध्याहारेण प्रत्युदाहरणवाक्यार्थः । गवीति
प्रत्युदाहरणमपि अत्रावङ् मा भूदिति अध्याहारेणैव
योजनीयम् । अन्यथा ऽनन्वयात् । प्रायशश्च प्रत्युदा-
हरणवाक्येष्वध्याहारेणैव योजनमित्यलम् । यत्तु
सर्वत्र विभाषेति प्रकृतिभावमुक्त्वा प्लुतप्रगृह्या इत्यतः
पूर्वमय प्रकृतिभाव इति वचनम् । तदनवधानात् ।
दूराद्धूते च गुरोरनृत एतत्सूत्रद्वये यद्वक्तव्यं तञ्चरी
करीति सूत्रे उक्तम् ॥

## ईदूदेत—।

अत्र द्विवचनान्तं प्रगृह्यमिति प्राचः प्रवाद इति
केचित् । तन्न । द्विवचनमित्येव प्रायशः पाठात् ।
अत एव ईदूद्द्विवचनस्य विशेषणं तेन च तदन्तवि-
धिरित्याह । ईदूदेदन्तमितीति प्रकाशः । द्विवचना-
न्तमिति पाठेऽपि इहान्तशब्दः स्वरूपवाची । अन्तं
स्वरूपे ना न स्त्री शेषेऽन्तिके त्रिषु इति मेदिनीको-
शात् । तेन च द्विवचनशब्दस्य कर्मधारयः । तेन कु-
मार्योरगारमित्यादावनतिप्रसङ्गात् । सुप्तिङन्तमि-

त्यन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावे ऽपि क्षत्यभावाच्चेति ॥

ऊँ ।

यरवस्यानुनासिकत्वे यद्येतन् इत्यत्रानुनासिकार्थं कृतं यरोऽनुनासिक इत्यत्रानुनासिकग्रहणं प्रमाणम् । अन्यथा यरो यमि यमेत्येवावक्ष्यदिति । तन्न । एवं हि निर्देशे यथासंख्यप्रतीतौ एतन्मुरारित्यत्रानुनासिको न स्यात् । अत्र हि जातिपक्षाश्रयणस्यावश्यकत्वेनैतन्नयनमित्यादौ चरितार्थोऽयं चतुर्मुख इत्यादाविषेहापि न प्रवर्तते । अनितेः क्विपि सम्बुद्धौ आन् चिनोति इत्यत्र नश्छवीति रुत्वे अत्रानुनासिक इति पूर्वस्यानुनासिके यद्येतनांश्चिनोतीत्यत्रानुनासिको न स्याच्चेति ॥

मय उञः—

मयः परादिति पञ्चम्यन्तस्योञ्विशेषणत्वे उञ इति षष्ठ्यभावादुञः स्थानित्वदुर्घटत्वादिति केचित् । तन्न । मय गताविति धातोः प्रत्याहारस्य च मयः सम्भवात् प्रकृते कतरो मय् गृह्यत इत्यतो मय्विशेषणत्वेन परादित्यस्य आचार्यं कथनात् ।

कारं राति ददाति ग्राहयतीति तदर्थात् प्रत्याहा-
हणमिति प्राचो भावादुञ् इत्यस्य षष्ठ्यन्तत्वे बाध-
नावात् । प्रत्याहारग्रहणे हेतुश्च बहुविषयसंग्रह-
। दिक् ॥

इत्यच्सन्धिः ।

---

यरोऽनु—।

यत्तु यत्तु प्राचा मयटि नित्यं पठितं यच्च हल-
करणे षणां षड् णामित्युदाहृतम् । यच्च यरोऽनु-
सिक इति वानुनासिक इति व्याख्यातं तत्सर्वं
ये भाषायां नित्यमिति भाष्यविरोधादुपेक्ष्यमिति
वत् । तन्न । मयटीत्यस्य प्रत्ययमात्रोपलक्षणत्वा-
षड् णामिति स्थितिप्रदर्शनम् । परिनिष्ठितं च
मिति व्याख्यातत्वात् । एवंच वानुनासिक इति
णो व्याख्यानं चिन्त्यमिति प्रकाशकृद्भिरेवोक्त-
ते प्राचोक्तौ तद्व्याख्यातुरुक्तौ च न कश्चित्
षोपद्रवः । अत्र यचि भं तसौ मत्वर्थ इति संहि-
ाठे तसाविति तात् पूर्वं दकारं प्रश्लिष्य भत्वेन
द्रुमन्त इत्यत्र नानुनासिक इति समादधुः । यत्तु
रप्रश्नेषे मृन्मानित्यादावतिप्रसङ्ग इति तत्तुच्छम् ।

भय इति मतुपो मस्य वत्वावश्यंभावान्मृन्मानिति रूपस्यैवासिद्धेः ॥

उदः स्थास्त—

सकारस्य पूर्वसवर्णस्तकार इति हरदत्तमाधवादयः । यद्यपि महाप्राणत्वघटितान्तर्यवांस्थाकार इहोचितस्तथाप्युदः परस्य स्कन्देः सस्य पूर्वसवर्णविधायकस्य रोरेवेति वार्त्तिकस्योत्कन्दो रोग इति भाष्यस्योदाहरणे थकाराश्रवणान्महाप्राणत्वाघटितमान्तर्यमिह पूर्वसवर्णनियामकमिति सामान्यतो ज्ञाप्यत इति तेषां भावः । उक्तोदाहरणे थकारश्रवणं सन्दिग्धं ज्ञापकञ्चोत्कन्द इत्युदाहरणविशेषमात्रविषयकमिति वादिनाऽस्मते तु सस्य थ इति मतं हरदत्तादिभिरन्येत्वित्यनेनोपन्यस्तमिति । एवञ्च सकारस्य तकार इति प्राचां ग्रन्थाः प्रत्युक्ता इति निरस्तम् । यदपि चयो द्वितीयाः शरीत्यस्योपन्यसनं तदतिरभसादिति । तन्न । अन्ये तु द्वियकारं रूपमाहुरित्युक्त्वा न चैतदप्रामाणिकम् । चयो द्वितीयाः शरि पौष्करसादेरिति सत्वे थकारश्रुतेरवर्जनीयत्वादिति हि प्रकाशकृद्भिरुपन्यस्तम् । तत्र राभस्ये पूर्वसवर्णं तकारस्यासिद्धत्वं शर्परत्वाभावो वा हेतुः स्यात् स च न सम्भ-

। । उदस्तकारस्य थकारः पूर्वसवर्णं तकारस्य च
। झरीति लोप इति द्विथकारकं रूपमिति तद-
प्रायात् । न चोदस्तस्य चर्त्वभूतस्य थकारं प्रत्य-
द्धत्वं चयो द्वितीया इत्यस्य काशिकायां भवतुस्थि-
ाहरणस्योदाहृतत्वेन थं प्रति चर्त्वस्य नसुने इत्य-
द्धत्वाभावात् । नादिन्याक्रोश इत्यत ऊर्ध्वसुद
ात्तः पूर्वं चयो द्वितीया इत्यस्य भाष्ये पाठाद्दास्य
काशिकोदाहरणोपष्टम्भाच्च उत्तरदेशत्वकल्पना-
ति ॥

## शश्छोऽटि ।

ननु शिव इत्यत्र जश्त्वे कृते इति प्रक्रियाकौ-
ी शिवबन्ततनोतिनिष्पन्नताच्छब्दपरत्वेन प्रकाशे
ाख्याता तेन न दान्तस्य जश्त्वोपन्यासवैयर्थ्यदो-
। न चैवमपि चर्त्वमुपन्यस्य चुत्वोपन्यासो विरुद्धः ।
ंवं प्रति चर्त्वस्यासिद्धत्वादिति केचित् । तन्न ।
ोपन्यासे चर्त्वचुत्वक्रमस्याविवक्षितत्वात् । कथम-
ाया भवतोऽपि छत्वमुपन्यस्य चुत्वचर्त्वोपन्यासः
ुच्छताम् । चुत्वपोमन्यन्त इत्युक्त्या ग्रगतिकगति-
स्येहाप्याश्रयणे प्रमाणाभाव इत्यस्वरसः प्रकाशित
ति न कश्चित् क्षुद्रोपद्रवः ॥

ङः सि धुट् ।

धुटश्चर्त्वेन तकारः । यत्तु तस्य चयो द्वितीया इति पक्षे थ इति तन्न । चर्त्वस्यासिद्धत्वादिति केचित् तन्न । उदः स्थेत्यत्रोक्तदूषणग्रस्तत्वात् । अत एव धुटि कृते चर्त्वं तस्य पूर्ववत् पक्षे थ इति हरदत्तः । अत एव प्रक्रियालाघवार्थं तुग्व्यैव विधेये धुट्करणं वैचित्र्यार्थमिति प्रकाशोक्तं सङ्गच्छते । न सङ्गच्छते च तत् चयो द्वितीया इति पक्षे थकारापत्तिदूषणं धुट पक्षे थकारस्येष्टत्वात् असङ्गतं च धुडभावपक्षे षट् सन्तीत्यत्र टस्य ठो नेति । तत्रापि पक्षे ठस्येष्टत्वादिति

नश्च ।

नकारात् परस्य सस्य धुड् वेत्याचार्याः । यत्तु अधिकृतपदविशेषणं न इतीति तदन्तविधिना नकारान्तादिति विवरणम् । तत्र पदानुवृत्तौ प्रयोजनं चिन्त्यम् । यदि तु ङमो ह्रस्वादित्यादौ तदनुवृत्त्यनुरोधेनेहापि तदनुवृत्तिरिति तदा ङ्णोः कुक् टुक् शरि ङः सि धुट् इत्यत्रापि तदनुवृत्त्यावश्यकत्वे ङकारणकारयोरिति डात् परस्येति च विवरणानौचित्यात् कथं तर्हि शि तुगित्यत्र नस्य पदान्तस्येति प्रक्रियाकौमुदीति चेत् तत्र पदान्तग्रहणरहितपाठस्यैव प्राय

र्णनात् क्वाचित्कतया पाठेऽपि अपदान्तनकार-
नुस्वारेण भाव्यमिति पदान्तस्यैव तुगितिव्युत्पा-
न्नपरत्वेनाधिकृतपदग्रहणाविवरणात् । अत एव
ान्तस्येति न विवृतम् । नश्चेत्यत्रापि कुतो
व्युत्पादितमिति चेन्न । एकजातीयस्यार्थस्यैक-
ुत्पादनेनैवान्यत्र तदवगमात् । न चैवं समानि
ान्तादिति व्युत्पादनमिति वाच्यम् । पदाधि-
भावे न इत्यस्य विशेषणत्वाभावेन तदन्तविवर-
ाकृत्यं स्यादिति । पदाधिकारलभ्यस्य तदन्तवि-
स्यान्यत्रापि तदन्तोपलक्षणत्वे तु कथंचित् यत्रा-
ऽपि पदादित्यनुक्तेर्न्यूनतेति बोध्यम् ॥

शि तुक् ।

अत्र तुकः पूर्वान्तत्वात् कुर्वन्त्स्ते इत्यत्र पदा-
येति णत्वनिषेधो न स्यादिति पूर्वपक्षे स्तोः
श्चुरित्यत्र स्तोः श्चुनेति योगविभागे स्तो नेत्यनु-
श्चुना योगे स्तोर्णत्वनिषेध इति समाधानम् ।
नश्चेत्यत्र धुटःपरादित्वे कुर्वन् सीदतीत्यत्र
न्तस्येति णत्वनिषेधः प्रयोजनमिति प्राचां ग्रन्थः ।
बहिरङ्गपरिभाषया गतार्थमिदमुभयमिति प्रकाशः

कार्यकालपक्षमाश्रित्येति बोध्यम् । यत्तु तत्र त्रैपादिकेऽन्तरङ्गे परिभाषेयं न प्रवर्त्तत इति वृध्युपास्य इत्युदाहरणे स्वोक्त्या सह विरोध इति । तन्न । तत्र त्रैपादिक इत्यस्य क्वाचित्कत्रैपादिकपरत्वेन व्याख्यानेनाविरोधादिति । सन्नुरुच्छ्रुरित्यत्र ॥

सन्नौ सच्छ्रा सचश्रा सशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥

इति केचित् । तत्र चयो द्वितीया इति छत्वविकल्पनाद्रूपद्वयवृद्धिर्बोध्या ॥

ङमः—।

अत्र लाघवात् । ङमो ह्रस्वादचि द्वे इति सूत्रयणीयम् । कुर्वन्नास्ते इत्यादौ तु बहिरङ्गस्यद्वित्वस्यासिद्धत्वेन पदान्तस्येति णत्वनिषेधसंभवात् । राज्ञ इत्यादौ त्रैपादिकेऽन्तरङ्गे ययोद्देशपक्षाश्रयणेन बहिरङ्गपरिभाषाऽप्रवृत्तिस्वीकारेऽपि नाकुर्ट इत्यादौ त्रैपादिके विसर्जनीय इत्यत्र णत्वनिषेधे लाघवानुरोधेन कार्यकालपक्षाश्रयणे तत्प्रवृत्तिस्वीकारौचित्यादिति प्रकाशकृतः । अत्रेदं तावदवधेयम् । नित्यग्रहणस्य विस्पष्टार्थत्वेन करणाकरणे न्यासद्वयेऽपि तुल्येऽवशिष्टभागेऽर्द्धमात्रालाघवायोक्तप्रतिपत्तिगौरवसहनं न युक्त

चत्कारकारि । तस्मान्मात्रालाघवाय द्वे अचि
ानुङम इति सूत्रयणीयम् । यत्तु परमदण्डिना-
ादौ अन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्यादिति ।
। नुटो नलोपं प्रत्यसिद्धत्वेन नलोपापादनस्यै-
ातत्वादिति । अत्रानुनासिकः अनुनासिकात्
ाति सूत्रयो रोः पूर्वस्येति रोः पूर्वस्मादिति चो-
: व्याख्यानेऽपि ग्रहणस्योपलक्षणत्वमुक्त्वा
लोपे केषांचिदनुनासिकानुस्वारयोरूपसानवधा-
। सं पुंकानामिति । यत्तु पुंस्कोकिल इत्यादा-
त्पत्तिपक्षे षत्वप्राप्तौ संपुंकानामिति स इति
। पुंसुहुसोःषत्वप्रतिषेधात् । सति हि सवचने
। षत्वनिवृत्तौपुनः षत्वनिषेधोऽनर्थकः । तदभावे
स्यावश्य कत्वादिति । न चैवमपि पुंस्त्वमि-
ौ इस्वास्तादौ तद्धित इति षत्वनिवृत्त्यर्थमयं
रः स्यादिति वाच्यम् । कृतेऽपि सकारे तस्य
र्गः । कुकःत्यनुरोधेन विसर्जनीयस्थानिकत्वात्
र्जनीयस्थानिकस्येदुदुपधस्येति षस्य निवृत्तावपि-
ादिति सस्थानिकस्याजिवृत्तेः । का तर्हि पुंस्त्व-
ादौ षत्वाभावाय गतिरिति चेदियम् । इदुदुप-
ेत्यत्र पुंसुहुसोः प्रतिषेध इति वचने पुंग्रहणं
षत्वनिवृत्त्यर्थं सकारविधानादेव तन्निवृत्तेः सि-
ादिति इत्यादिति षत्वनि वृत्त्यर्थं तस्मात्

पुंस्त्वमित्यादौ वाचनिकी षत्वनिवृत्तिरिति । इदमेवाभिसन्धाय ह्रस्वात्तादाविति सूत्रे पुंसःप्रतिषेधः पुंस्त्वं पुंस्तेति हरदत्तो व्याजहार । तस्य भाव इति सूत्रे पुंस्त्वमिति भाष्योदाहरणन्तु न षत्वाभावज्ञापकम् । अनुस्वारपक्षे ह्रस्वात् परत्वाभावेन षत्वाभावे तदुदाहरणसंभवात् । वस्तुतस्तु समादीनां रोर्विसर्जनीयस्य वा सविधानापेक्षया तेषां साक्षात्सविधानमुचितम् । तच्चैवं समः सुटीत्यत्र सकारान्तरप्रश्लेषात् समः सकारो विधीयते स एव पुमःखयीत्यत्रानुवर्त्तते कानाम्रेडित इत्यत्र च मण्डूकप्लुत्येति । न चैवं कानः सस्य रुप्रकरणबहिर्भावात्ततः पूर्वस्य कथमनुनासिकादि । अनुनासिकानुस्वारयोस्तावत्पर्यन्तमधिकृतत्वात् । एवं सति कान एव रोः सवचनारम्भेऽपि संपुमोर्वचनानर्थक्याच्च कास्कानित्यस्य कस्कादित्वे तु तदर्थमपि न सवचनारम्भ इति ॥

पुमः—।

इह ख्याधातौ नेति केचिदिति प्रक्रियाग्रन्थोपन्यासो निर्बाधस्तथा तत्प्रदीपादवधेयम् ॥

कुप्वोः—।

यत्तु प्राचा विकल्प इत्युक्तम् । तन्न ।≍क≍पाभ्यां-

सत्वप्रसङ्गादिति । सोऽयमनुक्तोपालम्भः । चा-
इत्येव पाठात् क्वाचित्के तथा पाठेऽपि
ष्टे विसर्गे ≍क≍पयोर्विकल्पः फलतीत्यर्थः ॥

कस्का—।

≍क≍पयोरपवाद इति केषांचिद् ग्रन्थे विसर्ज-
चेति शेषः । न च कस्कादेराकृतिगणत्वात्
र्तित्यस्यापि कस्कादित्वादेव सत्वं कुतो नेति
म् । वचनेन कस्कादित्वकल्पनेन वा सकार-
विशेषाभावात् । संस्कर्त्तेत्याद्यर्थं समः सवचन-
यकत्वाच्चेत्यवधेयम् ॥

इति हल्सन्धिः ।

तु सोऽपदादाविति सूत्रेऽपदाद्योःकुप्वोरितिम-
कमुपादायोक्तं सूत्रे तु व्यत्ययेनैकवचनम् । यदि
र्विशेष्यते ऽपदादौ खरीति तदा यथाश्रुतं साधु ।
खरीति मण्डूकप्लुत्याऽनुवर्त्यमिति क्लेश इति ।
खरीत्यनुवृत्तावपि कुप्वोरिति न समानाधि-
भिन्नवचनत्वादिति षष्ठ्यन्त वाच्यम् । षष्ठ्य-
न्तर्गतत्वं तथा च कुप्वन्तर्गतेऽपदादौ खरी-
फलितस्तथा च खरीत्यननुवृत्तावपि का क्षति-
मण्डूकप्लुतिक्लेशः स्यात् । एवं खर्विशेष्यतेऽ-
खरीत्युत्प्रेक्षणमप्यनुचितमिति चिन्त्यम् ।

अत एव कुप्वोः≍कः≍पौ चेति सूत्रे कुप्वोरिति षष्ठी व्याख्याताचार्यैः । सप्तम्यां हि सत्यामपदादावित्य त्र व्यत्यवाश्रयणापत्तेरिति । इदुदुपधस्य चाप्रत्यय स्येति प्रत्ययस्य यो विसर्जनीयो न भवतीत्याकरः अप्रत्ययस्येति समानाधिकरणं विसर्जनीयविशेषण मित्यन्ये । तन्न । सर्पिष्करोती त्यत्र सुपोःसामर्थ्य इति वैकल्पिकषत्वप्रवृत्तावपि तिष्ठतु सर्पिः पिव त्वमुदकमित्यत्रेदुदुपधस्येति नित्यषत्वप्रसङ्गात् । न चेष्टापत्तिः । आकरमते प्युणादीनामव्युत्पत्त्याश्रयणं तथा स्वीकारादिति वाच्यम् । व्युत्पत्त्याश्रयणे दोष तादवस्थ्यात् । इसुसोरित्यत्र सर्पिष्करोतीत्युदाहरणे व्युत्पत्तिपक्षस्यैवाचाकरस्वीकृतत्वानुमानात् । अन्यथे दुदुपधस्येति षत्वस्येष्टत्वे कस्कादिषु सर्पिष्कुण्डि काशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थ इति स्व ग्रन्थविरोधः । अपि च इणः ष इति सूत्रे सर्पिष्या स्वामित्याद्युदाहरणासङ्गतेः इदुदुपधस्येत्यनेनैव ष त्वसिद्धेरित्यलम् ॥

इति विसर्गसन्धिः ॥

यण् स्यात्। परमदीध्यावित्यादौ च न स्यादिति दो दुर्धियः वृश्चिकभियेत्यादौ दुष्टा धीर्यस्येत्यर्थे धीशब्दार्थक्रियायोगाभावेन तं प्रत्यगतित्वात् वृ कसम्बन्धिनी भीरित्युत्तरपदलोपिसमासे वृश्चिक कारकत्वाच्च न दोष इति केचित्। तच्चिन्त्यम् प्र धीरित्यादाविवेहापि धीशब्दार्थे दुःशब्दार्थान्व तस्य गतित्वानपायात्। अन्यथा तत्र प्रध्यं प्रध्य स्वग्रन्थविरोधात्। ग्रन्थान्तरविरोधाच्च॥

## स्यत्यात्—।

वेति केचिदिति मूलमुपादाय स्यत्यादिति तिनिर्द्देशो यण्विषय एवोत्वं यथा स्यादिति विषये मा भूदतिसखिरागच्छतीत्येवमर्थं स्यादिति योर्ग्रहणे न प्रमाणमिति तेषामाशयः। तेनोत्वा सख्यः सूख्य इत्यादि भवति। उभयमप्येत स्थितमिति प्रकाशः। तत्र यद्यपि दीर्घग्रहणे णाभावो न विकल्पवादिनामाशयः तथा सति र्घ उत्वस्याभावेन विकल्पासिद्धेः। तथापि विकल्प देशेन दीर्घयोरपि ग्रहणमिति प्रागुक्तव्याख्याने तदीर्घग्रहणम्। एवंचैतद्भाष्यकैयटापर्यालोचनमू मिति केषाञ्चिदुक्तिराशयानवबोधनिबन्धनेति ध्ये

शुक्यु: पक्यु रिति प्रकाशस्तनेत्थं सूपपत्तिः यद्यपि गपूर्वस्येति च भाष्यादसंयोगाद्य: । एतच्च ादित्यस्वरसाविष्करणं प्रमाणाभावव्याख्याभेदकृतो त्य इति तदाशय इति भावः। उभयमपीत्यस्य विषय एवोत्वं दीर्घयोर्ग्रहणं वेत्यपूर्वस्येति षेध इति ज्ञायते तथा च पूर्वस्माद्विधौ स्थानिवद्भा- क्वचि चेति विहितेकारस्याभावे संयोगपूर्वस्येव- । प्रतिषेधाभावे यणो दुर्वारत्वेनोत्वस्यापि प्रवृत्तौ ाकाभावादिति दिक् ॥

## इत्यजन्ताः पुंलिङ्गाः ।

यच्चावन्ते लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वा- ते । तद्भ्रमसात् । नहि लिङ्गविशिष्टपरिभाषया प्रा- ादिकत्वं भवति । न च लिङ्गविशिष्टपरिभाषयेति दिषयन्वेतीति वाच्यम् । रमाशब्दस्य प्रातिपदिक- भावेन प्रतिपदिकत्वादित्यस्यानुचितत्वात् । एकादे- ा पूर्वान्तत्वेन ग्रहणात् प्रातिपदिकत्वोक्तौ लिङ्गवि- ष्टपरिभाषोपन्यासस्य वैयर्थ्यात् । उभयोर्हेतुत्वेनोप- ास इति यदि तदा समुच्चयार्थकचकाराद्यनुक्तेर्न्यू- ा । न ध्याप्रातिपदिकत्वाल्लिङ्गविशिष्टपरिभाषया ादय इत्यन्वय: । लाघवादप्रत्यय इति पर्युदासस्य

प्राक् स्वयं स्त्रीकारादेकादेशस्य पूर्वान्तत्वेन ग्रह
प्रातिपदिकत्वात् । निषेधेऽपि प्राक् प्रवृत्तप्रातिपा
त्वस्यान्तवत्वेन सत्वादप्रातिदिकत्वस्य हेतोः स्वरूप
द्धेः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य स्त्रीप्रत्ययवि
ष्टस्य ग्रहणमिति लिङ्गविशिष्टपरिभाषार्थः । तथ
प्रातिपदिकग्रहणे आबन्तस्यापि ग्रहणादुक्तपरिभा
इत्तिस्त्रीकारेणाबन्तत्वादित्युक्तेरेव युक्तत्वादिति ॥

## सर्वनाम्नः स्याट् ।

अत्र याडित्यनुवर्त्य सप्तम्या विपरिणमय्य तां
परतो याट्संनियोगेन सर्वनाम्नोऽसुङ्विधानेन
स्याट्ह्रस्वविधानं चिन्त्यप्रयोजनमिति प्रकाशः ।
सुड्विधानेऽसुष्यै इत्यादि न सिध्येदिति केचित् ।
आवेकादेशस्य परादित्वेन प्रत्ययत्वात्तदादेः
सुडः प्रत्ययत्वेन तदवयवस्य सस्य षत्वेऽसुष्यै इत्य
सिद्धेः । अत एवातिखट्व इत्यादावेकादेशस्याप
दादेशस्य ह्रस्वस्याप्त्वेन ततः परस्य सोर्लोपो दी
हणेन वारितः । न च सर्वनामत्वाय पूर्वान्तवत्वे
वश्यकत्वे उभयत आश्रयणादन्तादिवत्वाभाव इ
च्यम् । लिङ्गविशिष्टपरिभाषयान्तवत्वाभावेऽपि स
मकार्यसम्भवात् । एकस्मिन् कार्ये उभयत आश्र

भावाच्च। न चैवमप्यसेरिति सान्तप्रतिषेधादुत्वमत्वे न स्यातामिति वाच्यम्। "असेरित्यस्य अः सेर्यस्येति कृतत्यदाद्यत्वस्येत्यर्थाश्रयणात्। न चादोऽमादस्यत्यद इत्यत्रोत्वाद्यभावस्य ओकारसकाररेफसहितस्य प्रतिषेधो वाच्यस्तत्रादस्यतीत्यत्रादसोऽपदत्वादिह च पदाधिकारादुत्वाद्यप्राप्तौ सग्रहणमनर्थकमित्यपदस्याप्यदस उत्वादि ज्ञापयति तेनामुमित्यादि सिध्यतीत्याकरसिद्धं तच्चैवं सति विरुध्येतेति वाच्यम्। लाघवोपष्टम्भस्य अः सेर्यस्येति व्याख्यानस्यादोऽमेत्याद्यतिप्रसङ्गवारकस्याप्याकरसिद्धत्वात्। न मुन इत्यस्य चोक्तार्थज्ञापकत्वादिति न कश्चित् क्षुद्रोपद्रवः। यत्तु वस्तुतस्तु आमि सर्वनाम्नः सुट् याटो ह्रस्वश्चेति सूत्रयितुं युक्तं न चैवं याट एव ह्रस्वापत्तिः। दीर्घोच्चारणसामर्थ्यात्। ह्रस्वोच्चारणेऽप्यकारसामर्थ्यादेवातो गुणस्य वारयितुं शक्यत्वादिति तन्न एवं हि सति नेत्रय इत्यादावनुष्टत्तस्यामीत्यस्य याट इत्यत्रापि सम्बन्धे सर्वस्यामित्यादौ ङेराम्येव याट् स्यात् न तु सर्वत्र व्याख्यानमत्र शरणं च मण्डूकप्लुतेस्वाश्रयणं च सूत्रविपर्यासो न चमत्कारमावहतीति किञ्च कथं दीर्घोच्चारणसामर्थ्यं न हि याटो ह्रस्वाभावेऽपि दीर्घोच्चारणसाम-

र्थंवृद्भवतीति स्त्रीोच्चारणेऽपीत्यादिना भवदुक्तस्यै
र्थैक्यस्यापरिहारादिति ॥

# विभाषा दिक्समासे—।

न बहुव्रीहाविति निषेधे प्राप्ते विकल्पोऽयां
प्रकाशस्तदापातत: । तस्यालौकिकप्रक्रियावाक्या
तसर्वादिविषयत्वादस्य च समासविषयत्वादिति केचि
तन्न तस्यालौकिकवाक्यविषयत्वेऽपि समास एव प
त्वात् । यत्तु अतिखट्वायेत्यत्र लाक्षणिकत्वान्न
एवमतिसर्वायेत्यत्र न स्याडिति वदन्ति । तत्र न स्या
शविषये लक्षणप्रतिपदोक्तपरिभाषा प्रवर्त्तते अति
वैयर्थ्यापत्तेः स्याटस्तत्सम्भव एव नास्ति संज्ञोपसर्ज
पाठात् पर्युदासादिति केचित् तद्भावानवबोधात्।
अयं भाव: । याडाप इत्यादावङ्गाधिकारादाबन्ता
परस्येत्यादिरर्थस्तत्र च प्रत्ययग्रहणं यस्मात् स वि
इति तदादिग्रहणस्य स्त्रीप्रत्यये निषेधेन प्राप्तोऽपि
लाक्षणिकत्वाद्गौणत्वान्न । गुणभूतस्त्रीप्रत्यये तदा
यमाङ्गीकारात् । गौणलाक्षणिकयोर्हि लोकपय
प्रसिद्धम् । तस्माद्ये आपो विवक्षितमुक्तस्त्र च स
ल्टस्येति विशेष इति ।

# ङिति ह्रस्वश्च ।

यत्त्वत्र नित्यस्त्रीत्वमीदूतोर्विशेषणं ह्रस्वयोस्तु स्त्रियामित्येव न तु नित्यस्त्रीत्वपर्यन्तमिति केचित् तन्न। अतिश्रियै ब्राह्मण्यै इति भाष्योदाहरणाल्लिङ्गान्तरानभिधायकत्वरूपस्य नित्यस्त्रीत्वस्येदूद्विशेषणत्वायोगात्। अत एव ङिति ह्रस्वश्चेत्यत्रैवंविधो नियमो नाश्रीयत इति सामान्यत एव कैयटेनाभिहितं पदान्तरसमभिव्याहाराभावेऽपि स्त्रीत्वबोधकत्वरूपस्य तु ह्रस्वयोरपि सम्भवात् अत एव नित्यस्त्रीत्वप्रापकस्याख्यत्वेन ह्रस्वो विशेषितः काशिकायाम्। हरदत्तेनाप्याख्यापदकृत्यव्याख्यावसरे आख्यपदसामर्थ्यात् पदान्तरमनपेक्ष्य यौ स्त्रियामाचक्षाते इत्याश्रीयते इष्टप्राणिप्रभृतीनां तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति ङिति ह्रस्वश्चेति संज्ञा भवत्येवेत्युक्तम्। न च व्यावर्त्याभावाद्ध्रस्वांशे न नित्यत्वसम्बन्धः। अतिकौशाम्ब्यादीनां व्यावर्त्यानां सद्भावात्। इत्युक्तग्रामणीखलप्वोरेवानित्यस्त्रीत्वात्(?) व्यावर्त्यत्वावित्यत्र वर्णयोः ईदूदंशोऽपि नित्यात्वतं(?) व्यावर्त्याख्याविन्यत्र वर्णयोः ... इदं त्ववमात्र कृत्स्नजरतीयस्याप्रामाणिकत्वादिति। इदं त्ववधेयम्। स्त्र्याख्यावित्यत्र वर्णयोः संज्ञित्वे एकसंज्ञाधि-

कारात् गुरुसंज्ञया नदीसंज्ञासमावेशो न स्यात्।
च वात्वीबन्तो इत्यच गुरोरनृत इतीकारस्य प्लु
स्यादिति तदन्तस्यैव नदीसंज्ञोक्ताचार्यैः। तत्राङ्गाधि
तदन्तविधिसत्वे लक्ष्म्यादावङ्गाधिकारे तस्य च तदु
दस्य चेति व्यपदेशिवद्भावेन वा आडादिसिद्धिरित्या
यः। न चैवमाच्छीनद्योरित्यनेन तुदन्तीत्यादौ कथ
शतुर्नदीपरत्वाभावादिति वाच्यम्। तत्र नदीग्र
स्वरितत्वेन तदवयवस्य ङीपो नदीशब्देन ग्रहणा
त्तत्परत्वसम्भवात्। एतेन जानतीत्यादौ शतुरनुम
नुमः शतुः पराया नद्या उदात्तत्वं व्याख्यातम्।
तु संज्ञासमावेशप्रयोजनाभावादङ्गयोरेव नदी
क्तम्। तदन्तस्यापि नदीत्वे त्वत्यभावः। ङेरामि
नद्यन्तत्वोक्तिस्तु पक्षद्वयसाधारणी। अङ्गाधिकारेण
न्तविधिलाभात्॥

## इदुद्भ्याम्।

यत्त्वेतत्सूत्रानुपन्यसनं प्राचः प्रामादिकं
तन्न। परत्वादौत्वेऽपि पुनः प्रसङ्गविज्ञानेन ङे
त्येव सिद्धे रेतुरस्तत्र मनाङ्य(?)चेष्टवाच्चित्वात्समपि
इति किमिति प्राचा ध्वनितत्वात्॥

## अचि र- ।

ननु मध्येऽपवादन्यायेनोत्वदीर्घौ बाधतां गुणान्न् कथं बाधेतेत्याशङ्क्यापवादशब्दस्य बाधकत्वोपगात्वात् परशब्दस्य चेष्टवाचित्वात्तमपि बाधते इति ाशङ्कतः । तन्निर्मूलं क्लिष्टं चेत्यन्ये । तन्न । अचि-देशे जस्युपसंख्यानगुणपरत्वादिति मूलसत्वात् । सति बाध्यविशेषचिन्ताङ्गीकारे उक्तक्लेशावश्यकत्त्व । जस् ग्रहणं ङिसर्वनामस्थानोपलक्षणं प्रियतिसृाति भाष्ये उदाहरणादिति कैयट इत्यास्तां तावत् ॥

## इत्यजन्ताः स्त्रीलिङ्गाः ।

---

## अतोऽम् ।

यत्तु मित्येव च्छेदो लाघवात् । तत्र सोर्मि कृते ानमिति सिद्धं द्वितीयैकवचने त्वादेः परस्येत्यकास्य मकारे अत इति तकार उच्चारणार्थ इति वतैवोक्तत्वान्निमित्तस्याकारसन्निपातस्य दीर्घे सत्यथ विरोधात् । प्रकाशकृतस्तु सुपिचेति दीर्घस्तु प्राप्नोते सन्निपातपरिभाषया अनित्यत्वादित्याहुः । केचित्तु ीर्घविधो सा न प्रवर्तत इत्यनूद्य कथादिभ्यः अम्

स्यान्नलोप इति सूत्रयोः सुपि चेति दीर्घत्वे सं
तपरिभाषाप्रवृत्तेर्भाष्यकृता ध्वनितत्वाच्चायुक्तमि
तेषामयं भावः। कष्टायेत्यादिज्ञापकेन कल्पितं
न यमात्रविषयमपि तु सुपि चेत्येतद्विषयमात्रपर
थाऽसन्देहाल्लाघवाच्च मत इत्येवावक्ष्यत्। अत एवै
स्वादिति सूत्रे भाष्ये हल्ग्रहणाननुवृत्तौ हे कुम
टावादेः परस्येत्यकारलोपे सुपि चेति दीर्घत्वे हे कु
मिति प्रसज्येतेति कथादिसूत्रस्थभाष्याविरोधावि
रामायेत्यत्रत्यप्रक्रियाप्रदीपादवधेयम्। यत्तु
कांसेत्याद्युपन्यस्य वस्तुतस्तु प्रकृतिग्रहणं प्रकारा
त्युक्तमित्यादि तत्र सन्दर्भशुद्धिः कथमिति चिन्त्य

## अस्थिदधि—।

प्रियदध्नेत्यत्र दधिशब्दस्योरः प्रभृतित्वेन
कब् प्रियदधेति भाष्योदाहरणेनानित्यत्वान्न।
तथोदाहरणं भाष्ये न दृष्टमिति नास्तीति क्वाचित्
र्शनस्याभावासाधकत्वात्। सार्वत्रिकस्य च तस्यासि
जराया इति सूत्रे नुमनङोर्विप्रतिषेधस्य दध्ना सक्थ
दाहरणे सकलपुस्तकसिद्धे सक्थिशब्दानङ्वक
प्रियसक्थनेत्यस्येव दधिशब्दानङ्वकाशस्य प्रियद
स्यावश्यकत्वाद्भाष्ये तस्योपलम्भाच्चेति। मधुश

पन्यस्त्वेशमस्तु सान्वादय इति जरन्तः। अत्र मधुशब्द-स्य नपुंसकमात्रवृत्तित्वेन स्नुः प्रस्थः सानुरस्त्रियामिति पुंनपुंसकसाधारणसानुशब्दस्य कथं तत्साम्यं अत एवै-वं मध्वादय इत्युक्त्वा सानुशब्दः पृथगव्युत्पादितो ऽन्यै-रिति नाशङ्कनीयम्। "मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात् पुंन्नपुंसकयोर्मधुरिति" शाश्वतकोशे पुंनपुंसकत्वेन मधुशब्दस्योक्तत्वात्। म-णरत्नेऽप्यर्द्धर्चादिषु मधुशब्दस्योदाहृतत्वाच्च। स चोक्त-कोशवक्ताद्विषयविशेषे एव "मधुमङ्गनाः स्मरसखं रसख-ण्डनवर्जितमिति" रघुश्लोके उक्तावष्टम्भेन मधुशब्दं मल्लि-नाथो व्याचख्यौ। मधोस्तृषा इवासत इत्यादिलिङ्गव्यत्य-योदाहरणन्तु भाष्ये क्षीरवाचिनित्यनपुंसकमधुशब्दा-भिप्रायेण। एवं च नित्यनपुंसकमधुवदस्वुशब्दः पुंनपुंस-कमधुशब्दवच्च सान्वादिशब्दा इत्यर्थ इति। प्रियक्रो-ष्टूणीत्यत्र परत्वात्तृज्वद्भावे पुनः प्रसङ्गविज्ञानादजन्त-लक्षणो नुमिति व्याचख्युः। यत्तु वृद्ध्यौत्वतृज्वद्भावगु-णेभ्यो नुम् पूर्वविप्रतिषेधेनेति भाष्यवार्तिकविरुद्धमि-दमिति। तन्न। पूर्वविप्रतिषेधे क्षशक्रोष्टुने अरण्यायेति भाष्योदाहरणेन काशिकायां विभाषा तृतीयेतिसूत्रे एवैतद्वचनोदाहरणेन चास्य पूर्वविप्रतिषेधस्य विभा-षेति तृज्वद्भावविषयत्वावधारणात्। न च वैकल्प-

क्रुष्टुवद्भावग्रहणवैयर्थ्यमिति वाच्यम् । प्रियक्रो
ष्ट्वादिव्यावृत्त्या तस्यार्थवत्त्वात् । न च तृज्वद्भावेन पर
न्नुमो बाधे सकृद्गतिन्यायाश्रयणेन पुनरप्रवृत्तौ प्रि
क्रोष्ट्रे इति स्यात् । तच्च पाक्षिकं पुंवद्भावेनेष्टमे
वाच्यम् । प्रियतिसृणी इत्यादौ तिसृभावेन ब
तस्य नुमः पुनः प्रसङ्गविज्ञानेन प्रवृत्तेरिहापि त
द्भावेन बाधितस्य प्रवृत्तेः प्रसङ्गात् । अत एव स
तपरिभाषया न नुमित्यप्यनाशङ्कनीयम् । नुमः
वयवत्वेन सन्निपातविघातकत्वाभावाच्चेति दिक् ।
इत्यनेकदेशविकृतस्यापि प्रद्युशब्दस्य प्रद्योशब्द
न्यत्वाद्भाषितपुंस्त्वविकल्प इति प्राञ्चः । नन्वेकदे
कृतमनन्यवदित्यस्य भाष्येऽनाश्रयणात्तत्प्रयोजनस्य
निवदादेशोऽनल्विधावित्यनेन साधितत्वात् प्रकृते
दनुपपत्तेः कथमेतत् । अयं हि स्थानिवद्भावः शास्त्री
कार्यातिदेश इति सिद्धान्तात् प्रकृते च पुंवद्भ
शास्त्रीयस्थानिकार्यत्वाभावात् भाषितपुंस्कत्वस्य श
यत्वाभावादिति चेत् । इत्थम् । स्थानिवदादेश इत्
शास्त्रीये कार्ये कर्त्तव्ये स्थानिधर्मः शास्त्रीयोऽशा
वा ऽतिदिश्यते । अत एव वृक्षायेत्यत्र स्था
प्रवर्तमानेऽपि सुपि चेति दीर्घत्वे कर्त्तव्ये स्थानि
वेन सुप्त्वमाश्रितं भाष्ये एतदर्थमेवोक्तं स्थान्यव

वानस्त्रिधाविति निषेध इति अत एवावधिष्टेत्यत्राडो मन्हन इत्यात्मनेपदे कर्त्तव्ये ऽशास्त्रीयस्यापि हन्लि-ङ्ग्स्यातिदेशः। न च स्वं रूपमिति शास्त्रीयाया हन्सं-ज्ञाया इहातिदेशः स्वं रूपमित्यस्य भाष्ये प्रत्याख्या-नात्। अत एव च समाद्येत्यत्र रायञ्लोपाविति पूर्ववि-प्रतिषेधेन णिलोपे प्रत्ययलक्षणेन वृद्धौ स्थानिवद्भा-वेनादित्वादटो जग्ध्यादेशप्रसङ्गः स्थानिवदादेश इत्य-शास्त्रीयमपि स्थानिगतमनादिष्टादचः पूर्वत्वमचः परस्मिन्निति शास्त्रीये कार्ये कर्त्तव्येऽतिदिश्य णिलोपस्य स्थानिवद्भावेन निराकृत आकरे। एवं च स्थानिगत-भाषितपुंस्कत्वमतिदिश्य द्युशब्दे पुंस्त्वविकल्पप्र-वर्त्तनं निर्बाधमित्यलं पल्लवितेन॥

## इत्यजन्ता नपुंसकलिङ्गाः।

## हो ढः।

यत्तु लिट्स्वित्यत्र चयो द्वितीया इति प्रवर्तनम-युक्तम्। चर्त्वस्यासिद्धत्वादिति। तदुदः स्थेत्यत्रोक्तदि-शोपेक्ष्यम्। यदपि स्वोक्तेऽर्थे प्रातिशाख्यमुपष्टम्भकमु-क्तम्। ऊष्मोदयं प्रथममेके द्वितीयमाहुरपदान्तभाज-मित्यत्रापदान्तेत्यादि विशेषणं स्वकृच्छत इति तदपि

न लोके तदविषयत्वात् । कथमन्यथा प्राङ्कृष इत्यत्र तदुपन्यसनं भवतो भवत्स्वित्यत्र वृत्तिकृत सङ्गच्छेतेति दिक् ॥

## दादेः—।

यत्तु धातोरित्यावर्त्यते तच्चैकमुपदेशकालं लक्षयति तेनाधोक् दामलिड्भतेर्दामलिडित्यत्राव्याप्त्यतिव्याप्ती नेति । तद्भाष्यविरुद्धम् । तथाहि भाष्ये अधोगित्यव्याप्तिवारणाय धातोरिति दादेरपेक्षयाऽवयवषष्ठी तेन धातोरवयवस्य दादेरित्यर्थः । उपदेशे दादेरित्यर्थे तु वैयधिकरण्येनान्वयो मुधैव स्यादिति स्पष्टमेव । एवं दामलिड्भतेर्दामलिडित्येव भाष्यमियुक्तमुत्पश्यामः । तथा चैकाचःसूत्र इव वृत्तावपि धातोरिति वैयधिकरण्यमाश्रित्य दकारादेर्धातोरित्यूचुः ।

## वाह ऊठ् ।

यत्तु विश्वौह इत्यादौ छन्दस्येव ण्विरिति ण्यजन्ताद्विजिति केचित् । तन्न । एवं सति णिलोपस्याचः परस्मिन्निति स्थानिवत्त्वेन वाहो भत्वाभावादूठो ऽप्रवृत्तेः । नच क्विपि णिलोपे क्वौ लुप्तं न स्थानिवदित्युक्तरूपनिर्वाहः । क्वौ विधिं प्रति न स्थानि

दित्यौत्सर्गिकत्वेन क्वौ लुप्तमित्यस्य सर्वत्र प्रवृत्त्यभावा-
त्। अत एव पिपठिषि ब्राह्मणकुलानीत्यत्र क्वावकार-
लोपस्य स्थानिवत्त्वान्न नुम् इत्याकरः। पादयतेः
क्विपि तु पद: पदेतिभाष्योदाहरणात् क्वौ लुप्तमि-
त्याश्रीयते। किञ्चात्र क्वौ लुप्तमित्याश्रयणे क्विनिमित्तं
यणादिसंप्रसारणं स्यादित्युक्तरूपमसंभव्येव। न च काम्य-
चः कित्त्वं कुतो नेति प्रश्ने प्रयोजनाभावादित्युक्तरिति
वाक्काम्यतीत्यत्र सम्प्रसारणं प्रयोजनं स्यादित्याशङ्कायां
वच्यादिभ्यो यो विहितः कित् तत्र सम्प्रसारणमित्या-
श्रितं तथा च प्रकृतेऽपि तत एव न सम्प्रसारणमिति
वाच्यम्। तथापि वाक्काम्यतीत्यत्र सम्प्रसारणाशङ्कावा-
रणायाथवा धातोः स्वरूपग्रहणे इति समाधाना-
न्तरस्य कैयटेनोक्तत्वात्तस्य तत्पक्षसंप्रसारणप्रसङ्गानुद्धा-
रात्। अपि च वच्यादिभ्यो विहित इति धातोः स्वरूप-
ग्रहणे इति परिहारद्वयैकरूप्याय प्रकृते क्वौ लुप्तमि-
त्यनाश्रयणस्यैवोचितत्वम्। अवयाः श्वेतवाः। चका-
रादुक्थशा इति प्राचोऽन्येषां च ग्रन्थे दृश्यते। एतच्च
काशिकाद्यनुसारेण। भाष्ये तूक्थशस्शब्दस्य सामान्येन
कः सिद्धः न तस्य निपातनं क्रियत इत्युक्तम्। अत
उक्थशा इत्येतदपि सम्बुद्ध्यर्थं निपातनं कर्तव्यं यदि
मन्त्रे दर्शनमस्तीति कैयटेन यदिशब्दः प्रयुक्तः॥

# दिव औत् ।

त उच्चारणार्थं इति केचित् । तन्न तस्य लोप इति सूत्रस्थेनानुबन्धानामेकान्तत्वे दिव औत् सर्वादेशः स्यादिति भाष्येण विरोधात् । न चैवं सति स्वरितत्वं स्यात्तच्च पृथिवी उतद्यौरिति लक्ष्यविरुद्धमिति वाच्यम् । व्यत्ययेनोक्तलक्ष्यसिद्धौ भाष्यबलादन्यत्र स्वरितत्वस्येष्टत्वात् । द्योशब्देनापि दिवसमानार्थेनोक्तलक्ष्यसिद्धेश्च । द्यौष्पितरित्यत्र स्वरितपाठस्यौतस्तत्वं विनाऽनुपपत्तेश्च । न च प्रत्ययस्वरेण फिट्स्वरेण वा दिव इकारस्योदात्तत्वे स्त्रंसनधर्मिणो वस्यानुदात्ते औकारे इकारे यणि उदात्तस्वरितयोरित्युक्तस्वरसिद्धौ किं तित्वेनेति वाच्यम् । औकारेणौकारस्य फिडन्तत्वतत्वविघाते भाविन्यकृतव्यूहपरिभाषया पूर्वं फिट्स्वराप्रवृत्तेरौकारस्यैव फिट्स्वरेणोदात्तत्वावश्यकत्वात् । सर्वनामस्थाने परे पुंसोऽसुङ्पक्षेऽप्यनेनैव न्यायेनासुङन्त एव समासान्तोदात्तत्वं प्रवर्तत इत्यसुङ उदात्तत्वसिद्धिरिति तत्र सूत्रे तैरभ्युपगमाच्च । द्युभिरक्तुभिरित्यादावेवमेव दिव उदात्तत्वाच्च । न हि दिव उत्तित् किं तु तपर इति दिक् ॥

## मो नो धातोः।

न च पदान्तत्वेन सिद्धौ प्राचः क्वचित्का झल्ग्रहणानुवृत्तिरनर्थिकेति वाच्यम्। प्रशामः सौ कृतनत्वस्य शान्त्यर्थकस्य स्वरादिषु पाठादव्ययत्वेन लुग्विषयेऽन्तरङ्गानपीति लुक्सामान्यमन्तरङ्गस्यापि बाधकं न तु सुपो धात्विति लुगेवेति मते सुपो लोपाप्रवृत्तौ पदान्तत्वाभावान्नत्वं न स्यादिति झल्निमित्तनत्वे सत्यव्ययत्वेन सुब्लुक्प्रवृत्तिरिति झलनुवृत्तिरित्यभिप्रायात्। न च स्वरादिषु प्रशान्पाठसामर्थ्यात् पूर्वं सुलोपाप्रवृत्तिः। झलनुवृत्त्यैव सिद्धे सामर्थ्यकल्पने गौरवापत्तेः। न च लोपं विना लुग्विषयाभावादानुपूर्व्यादेव लोप इति वाच्यम्। एवमपि प्रतिपत्तिगौरवमित्यभिप्रायात्॥

## किमः कः।

त्यदादीनामित्यनुवर्त्तते तेनोपसर्ज्जनस्य न। यच्चारम्भसामर्थ्यादिह सूत्रे द्विपर्यन्ता इति नियमत्याग इति तदनवधानात्। नहि त्यदादयो द्विपर्यन्ता इति नियमः। त्यदादीनि चेत्यादौ व्यभिचारात्। किन्त्वत्र द्विपर्यन्तानामिति। तथा च वार्त्तिकं त्यदादीनां द्विपर्यन्तानामकारवचनमिति॥

## न ङिसंबुद्ध्योः ।

यत्तु ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्येति व्याख्यानं तूचितम् । एवं हि प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्त्तव्य इति । तन्न छन्दसि संबुद्धेः सुपां सुलुगिति लुकः सत्त्वे तत्रापि निषेधापत्तिः परमे व्योमन्नित्यादौ सुपां सुलुगिति सप्तम्येकवचनस्य पूर्वसवर्णस्यादिष्विति पदत्वेन नलोप प्राप्तो निषिध्यते । ततः संयोगान्तलोपः । एतच्च सुप सुलुगिति सूत्रे प्रकाशे भाष्यादौ च स्पष्टम् । एवं च प्रत्ययलक्षणार्थनिषेधसामर्थ्यानुसरणक्लेशानापत्तिस्स एव च ङावुत्तरपदे प्रतिषेध इति वार्त्तिकमपि नारम्भ णीयं भवतीत्यपरं लाघवम् । प्राचां लुगन्तोदाहरणं तु वार्तिककारानुसारेणेति ध्येयम् ॥

## हन्तेरत्पूर्वस्य ।

अत्र कुव्यवायहादेशेषु प्रतिषेधो वक्तव्यः । किं प्रयोजनं हन्त्रः सुघ्नः प्राघानि । हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवतीत्याकरः । अन्ये तु हन्तेः अत्पूर्वस्येति योगद्वयं तत्राद्येनोपसर्गस्थान्निमित्तात् परस्य हन्तेर्नस्य णो विधीयते । प्रहण्यादित्यादि । द्वितीयेन हन्तेर्न

णो नियम्यते । स च योगविभागसामर्थ्यादनन्तर-स्येति न्यायं बाधित्वा सर्वोऽपि व्यवहितः कुमति चेत्यादि-रव्यवहितो हलोरिति च । एवं च हन्तहन इत्यत्र प्राति-पदिकान्तेति णत्वविकल्पोऽपि न । भाष्यं तु वार्त्तिकाश्र-यवर्णनमात्रपरं न वस्तुस्थितिः । वार्त्तिकेन सूत्रावयव-प्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्त्तिकस्यार्था-प्रसंग्रहस्यैव न्याय्यत्वादित्याहुः । तच्चिन्त्यम् । तथा सति योगविभागसामर्थ्याद्व्यवहितं कुमति चेत्येव णो निय-म्येत न तु प्रातिपदिकान्तेत्यादिर्मानाभावात् । किं णादिति तपरत्वं तत्कालावधारणार्थं न वा । आद्ये बहुहन्त्रहाणीत्यत्र णत्वं न स्यात् । द्वि-तीये प्राघानीत्यत्रापि स्यात् । यदि तु तपर-त्वात् प्राघानीत्यत्र न णत्वं एकाजुत्तरपद इत्या-रम्भसामर्थ्याच्च नित्यत्वे सिद्धेऽतिरिच्यमानं णग्रहणं नियमेन व्यावर्तितस्यापि विधानार्थमिति बहुहन्त्रहा-णीत्यत्र णत्वम् । बाध्यसामान्यचिन्ताश्रयणाच्च नाद्य-दोषोऽपीति विभाव्यते । तथापि णग्रहणं स्पष्टार्थ-मिति तत्रत्यस्वग्रन्थविरोधात् । इह च तत्प्रयोजनानु-पन्यासात् । अनन्तरस्येति न्यायं बाधित्वेति वदद्भि-र्बाध्यविशेषचिन्ताया एवाश्रयणाच्च । अपि च उपस-र्गादित्यस्योत्तरत्रानुवृत्तेरत्पूर्वस्येत्यत्रापि सम्बन्धे तद-

प्रेचो नियमः स्यादिति प्रघ्न इत्यादावेव स्यान्न तु वृत्रघ्न इत्यादावपि। न च योगविभागवैयर्थ्यं एकयोगत्वे प्रघ्न इत्यादौ हन्तेरित्यस्यैवाप्पूर्वग्रहणसामर्थ्यादृव्यवहितबाधसिद्धेरिति वाच्यम्। प्रघ्नन्तीत्यादिव्यावृत्त्या तत्सार्थक्यादिति दिक्॥

## उगिदचाम्—।

नलोपिनोऽञ्चतेरितीह व्याचख्युः। अत्रेदं चिन्त्यम्। उखास्रदित्यादावुगितश्चेति ङीपोऽतिप्रसङ्गवारणायोगिदचामित्यज्ग्रहणं भेदेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमार्थमित्याश्रीयते। अधातुग्रहणं च अधातुभूतपूर्वस्य सुध्वातोरञ्चतिनियमेन नुम्निवृत्तौ प्राप्तायां तद्विध्यर्थं तेन गोमत्यतेर्गोमानिति भवतीत्याकरः। तत्र नलोप्यञ्चतिग्रहणे उक्तनियमोऽपि नलोप्यञ्चतिघटित एव स्यादिति प्राञ्चीत्यादौ ङीबभावापत्तिः। न च सनकारेञ्चतौ नुम्तदभावयोर्विशेषाभावादञ्चेर्नुम् न। नलोप्यञ्चतिमात्र इत्यभिप्रायेणेह नलोपिन इत्यभिधानमिति वाच्यम्। सनकारस्य नुमि प्रत्यञ्चावित्यादौ नियतनकारनकारश्रुतेर्विशेषस्यासत्त्वात्। यदि तु नश्चापदान्तस्येत्यत्र न इति जातिनिर्देशान्नद्वयस्यैकोऽनुस्वारस्तस्य च परसवर्णे रूपेऽविशेष इति

तदा सूत्राभिप्रायं नलोपिग्रहणमिति । वस्तुतो नपुंसकस्य झलच इति सूत्रे गोमतीत्यादौ झल्ग्रहणेनोगिद्ग्रहणेन च नुमाऽनुस्वारपरसवर्णयोर्नद्वयश्रवणमाशङ्क्य न व्यञ्जनपरस्यैकस्यानेकस्य वा भेद इति समाहितं भाष्ये तेनेह व्यक्तिनिर्देश इति गम्यत इति नोक्ताभिप्रायकमिदम् । अयोगवाहानामविशेषेणोपदेशे त्वनुस्वारगरदिनिरमित्ते(?) पूर्वस्यानुस्वार उभयोः परसवर्णे नद्वयश्रवणं विशेष इति बोध्यम् । विधौ नियमार्थमिति व्यक्तिनिर्देशोऽपि । न चोगिदचामित्यत्राज्ग्रहणमावश्यकमञ्चतिसामान्यघटितनियमार्थमाश्रीयते । द्वितीयं तु सनकारस्याप्यञ्चतेर्नुमप्राप्तौ तन्निवृत्तये नलोप्यञ्चतिपरं नुम्विधौ नियमार्थमिति व्यक्तिनिर्देशेऽपि नलोपीत्यावश्यकमिति वाच्यम् । तादृग्वृत्तिबोधकस्याकरस्यानुपलब्धेरिति ॥

## अवर्णस्त्वसावनञः ।

## मघवा बहुलम् ।

अत्र वार्त्तिकम् । अवर्णास्तु मघोनश्च न शिष्यं छान्दसं हि तत् । मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादिति । अयमर्थः । अवर्णो मघोनश्चादेशो न

कर्त्तव्यः । ऋधातोर्विचि गुणोऽरित्यस्मात् मघशब्दाच्च छन्दसीवनिपाविति वनिपि मतुपि चार्वा अर्वन्ताविति मघवा मघवानिति च रूपद्वयस्य सिद्धत्वात् । नन्वेवं सर्वत्र रूपद्वयप्रसङ्गोऽत आह । दृष्टानुविधिश्छन्दसि भवतीति भाष्यमवतार्य कैयटेन व्याख्यातं भाषाशब्दा अपि नियतविषयाः किं पुनश्छान्दसा इति । एतच्चार्वन्शब्दविषयम् । मघवन्शब्दस्य तु नादेशपक्षेऽपि रूपद्वयस्य सर्वत्र स्वीकारात् । एवञ्चार्वन्शब्दः छान्दस इत्युक्तं भवति । अत एवार्वन्शब्दस्य भाषायामसाधुत्वं कैयटहरदत्ताभ्यामुक्तम् । एवं च ऋधातोर्वनिपि अर्वेति लोकेऽपीति केषांचिदुक्तिः प्रत्युक्ता । प्रत्युक्तं चार्वन्मघवन्शब्दयोर्भाषायामसाधुत्वं अर्वणस्तृ मघोनश्चेति भाष्यादिति हरदत्तोक्तिमनूद्य भाष्यस्य विशेषविषयत्वस्य प्रागेवोक्तत्वादिति तद्दूषणं मघवन्शब्दविषयभाष्यस्य मध्योदात्तमघवन्शब्दविषयत्वेनोक्तत्वेऽप्यर्वन्शब्दविषयस्य विशेषविषयत्वस्यानुक्तेरसम्भवाच्च । तथा च छान्दसेन वनिपा व्युत्पादितस्यार्वन्शब्दस्यैव सौ अनर्वन्शब्दस्यान्यथापि प्रयोग इति व्यवस्था छान्दसत्वप्रयुक्ता । अत एव छन्दस्युभयदर्शनादित्युदाहरणे भाष्योक्तेरमान्यर्वणः पदानीत्यत्र षष्ठ्यन्तार्वन्शब्दप्रयोगो व्यवस्थापनीयः । सत्यपि सूत्रे तस्य

छान्दसत्वेनैव व्यवस्थापनीयत्वेनेतरव्यवस्थायाऽपि तेनैव सिद्धे सूत्रे वैयर्थ्यमिति छान्दसत्वादेर्भावः। मतुपा तु भाषासाधारण्येन व्युत्पादितोऽवन्शब्दो यथेच्छं स्वादौ प्रयोक्तव्य इति न तु मघोनस्त्रादेशस्य मतुपा प्रत्याख्यानमनुपपन्नं रूपे स्वरे च वैलक्षण्यात्। तथाहि। त्रादेशपक्षे दीर्घविधौ संयोगान्तलोपस्यासिद्धत्वान्मघवन्निति रूपं मतुपि तु मघवानिति। श्वन्नुक्षन्नित्यादिना निपातितस्य कनिप्रत्ययान्तस्य मघवन्शब्दस्य त्रादेशे वकार उदात्तः। मतुपि ह्रस्वनुड्भ्यामिति प्राप्तस्यापि मतुप उदात्तत्वस्य न गोश्वन्निति प्रतिषेधादकारोकार इति। अनुपपन्नं च कैयटाद्युक्तं मघोनश्छान्दसत्वं श्वन्नुक्षन्निति निपातितस्य भाषाविषयत्वे बाधकाभावादिति चेत्। उच्यते वार्त्तिककारीयप्रत्याख्यानानुरोधेन त्रादेशपक्षेऽपि बाहुलकाद्दीर्घे संयोगान्तलोपो नासिद्ध इति न रूपभेदः। बाहुलकादेव च वकाराकार उदात्त इति न स्वरभेदः। नच प्रत्याख्यानानुरोधेन त्रादेशस्य छान्दसत्वविषय इति कल्प्यतां तथा च मतुप्यपि छन्दसि बहुलं छन्दसीति दीर्घाभावस्वरव्यत्ययाभ्यां त्रादेशसमानरूपस्वरं मघवन्नित्येव कुतो न कल्प्यत इति वाच्यम्। भाषासाधारण्येन प्रतीयमानस्य त्रादेशस्य मतुपा भाषासाधारण्येन प्रत्याख्याने छान्दसत्वकल्पनाया गौर-

वग्रस्तत्वात् । बाहुलकाश्रयणस्यावयोः समानत्वात् । ः
च बाहुलकाश्रयणेऽपि आदेशानुरोधेन मतुबन्त ए
रूपस्वरकल्पनाऽस्त्विति वाच्यम् । यथोत्तरं मुनीन
प्रामाण्यमिति वार्तिकस्वरसानुरोधेन सौत्रादेशप
एव बाहुलकाश्रयणमित्यादरस्य युक्तत्वात् । अत एव इ
न्ङीवनिपौ चेति वार्त्तिके मघमस्यास्तीति मघवा
बहुलमित्येतन्न कर्त्तव्यं श्वन्नुक्षन्निति निपातनान्मघ
शब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वादि
कैयटोऽपि संगच्छते । अन्यथा भाषायां शब्दद्वयसि
कथनस्य प्रकृतानुपयोगापत्तेः । मघोनश्छान्दसत्व
भिधानं तु वनिबन्तमघवन्शब्दाभिप्रायमिति स
निरवद्यम् । अत्रेदं निर्गलितम् । मघवन् शब्दोऽन
दात्तो भाषासाधारणः । वनिबन्तमध्योदात्तश्छान्दसः
मघवन्शब्दो मध्योदात्तो भाषासाधारण इति ॥

## पथिमथि—।

यत्तु ननु गुणा अभेदका इति पक्षे सूत्रेऽनुना
कोच्चारणे ऽप्यान्तरतम्यादनुनासिकः स्यादित्याशङ्क
ह । आ आदित्युक्त्वा गुणानामभेदकत्वेऽपि शुद्धैक
क्तेः सूत्रे निर्देशान्नातिप्रसङ्ग इति त्वसङ्गतम् । अभेदक
दोषस्य दुरुद्धरत्वात् एका व्यक्तिर्यत्र इत्युक्त्या

व्यक्त्यन्तरं न निर्दिष्टमित्यर्थः फलितः स च गुणानां भेदकत्वे सत्येव संगच्छते नान्यथेति। तत्तुरगारूढस्य तुरगविस्मरणमनुसरति इति॥

## इतोऽत्—।

अत्रेत इति तपरत्वं पन्थानमिच्छति पथीयति अस्मात् क्विप्यल्लोपयलोपयोः स्वादौ पन्थाः पन्थियावित्यादिरूपेऽत्वाभावार्थमिति केचित्। तन्न। पथिमथ्यृभुक्षामादित्यात्वे सुब्विधौ नलोपस्यासिद्धत्वेन नस्यात्वे सौ पन्थथा इति रूपं स्यादिति कथं पन्था इत्युक्तिरिति तावच्चिन्तनीयम्। न च बहिरङ्गपरिभाषया ऽत्वस्यासिद्धत्वान्नलोपप्रवृत्तिरिति वाच्यम्। एवं बहिरङ्गपरिभाषया पूर्वत्रासिद्धमित्यस्य बाधे॥

"शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा।
मतो वत्वे झलो जश्त्वे गुडलिरामान्निदर्शनम्॥"

इति पूर्वत्रासिद्धे वचनप्रयोजनस्यासिद्धिप्रसङ्गात्। किञ्च अल्लोपस्य स्थानिवत्वात् न्यादेशाप्रवृत्तौ पन्थियावित्याद्यपि चिन्त्यम्। न च क्वौ लुप्तं न स्थानिवदित्यल्लोपस्य स्थानिवत्वाभावः। क्वौ विधिं प्रतीत्यस्यैवोत्सर्गत आश्रयणात्। न तु क्वौ लुप्तमित्यस्य। तस्य क्वचिदेव सखोः सुतीरित्यादौ यणा-

द्यप्रवृत्तये आश्रयणात्। अभ्युपगतं चेदं दीधीवेवी-टामित्यत्र पिपठिषीत्यादिसिद्धये कैयटेन। न चेत इति तपरकरणादिहापि क्वौ लुप्तमित्यस्याश्रय-णं हरदत्तेन तकारस्योच्चारणार्थत्वाश्रयणात्। आ-चारक्विप्यनुनासिकस्य क्विझलोरिति दीर्घे नामधातौ भवदुदाहृते ततः कर्तरि क्विपि पथीनित्यत्र तत्सार्थ-क्याच्च। वस्तुतः शाविति नियमादिह न दीर्घ इति तच्च वक्ष्यते। अत एव प्रकाशेऽचैव इति सूत्रे इकारान्ता एवैताः प्रकृतय इति कौमारमते आचारक्विबन्तात्ति-पृशपोर्लघूपधगुणे पथेनतीत्यादि न स्यादिति परिष्कृ-तचरणाः। तस्मात् पथीः पथ्याविंत्यादि प्रकाशोक्तमेव साधु। दत्वं स्रुत्वं भ्रज्जाविति प्राञ्चः। न च स्रुत्वे दत्वमसिद्धमिति पूर्वं स्रुत्वं पुनर्दत्वमिति वक्तुं युक्तम्। झलां जश् झशीति निर्देशेन शस्य न जश्त्वमिति ज्ञा-पनेन भृज्जतीति निर्देशोपपादनाय दत्वस्रुत्वक्रमाव-श्यकत्वेन स्रुत्वे दत्वं नासिद्धमिति कल्पनात्। एतच्चैकयो-गनिर्दिष्टानामित्यत्र सौरदेवहत्तौ स्पष्टम्। त्वमह्रमित्यत्र शषे लोपोदाहरणे त्वमतो गुण इति पररूपोदाहरणं केषाञ्चिदसङ्गतम्। पररूपस्यान्तरङ्गत्वेन पूर्वं प्रवृत्तत्वा-त्। स्वपरग्रन्थविरोधाच्च॥

## साम—।

गौणतायां सुडभावान्नायमिति केचिदिति मूलमुपादाय साम इति यद्यपि सुड्ग्रहणं न स्थानिविशेषणं बाधात्तथाप्युपलक्षणं तु भवतीत्यादिनोक्तिसम्भवस्तन्मतस्य प्रकाशे स्पष्टः। तत्र केचिदित्यस्वरसे भाष्यादिविरोधः अत एव प्रकाशः। तथा च भाष्ये साक्षादुदाहृतमतित्वाकमतिमाकमितीति। एवञ्चैतद्दूषणायासः केषाञ्चिन्मुधैवेति बोध्यम्॥

## युस्मदस्मदोः षष्ठी–।

इहापादादौ किम्। युष्मान् रक्षतु गोविन्दोऽस्मान् कृष्णः सर्वदावत्विति प्राञ्चः। वेदैरशेषैः संवेद्योऽस्मानित्याद्यन्ये। तदुभयं चिन्त्यम्। गोविन्दोऽस्मानित्यादौ संध्यभावेऽस्मानित्यादेर्नवाक्षरत्वेनानुष्टुप्पादत्वाभावेन सन्धौ चोभयत आश्रयणे नान्तादिवदित्यस्मदोऽभावेन कथमिदं प्रत्युदाहरणमिति। तस्माद्युष्मदस्मदोर्व्यत्ययेन पाठे सर्वदेत्यत्र च सदेति पाठे युष्मदस्मदुदाहरणमिति बोध्यम्। अतएव॥

"रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता।

स एव नाथो भगवानस्माकं मधुसूदनः ॥”

इति काशिकायामुदाहृतम् । प्राचामुक्तावेकवाक्यस्थपदात् परत्वाभावस्तु नाशङ्क्यः । गोविन्दो युष्मानस्मान् रक्षत्वित्येकवाक्यत्वात् । कृष्ण इत्यादिस्तु पदादित्वसंपादकत्वात् ॥

## पश्यार्थैः ।

यत्तु दर्शनमिह ज्ञानमात्रमदर्शनं लोप इत्यत्र यथेति तन्न । अग्निचिदादौ क्विपादिनां लोपेऽपि ज्ञानस्य सत्वाददर्शनमित्यत्र दर्शनशब्देन ज्ञानमात्रग्रहणायोगादिति ॥

## सपूर्वायाः ।

यत्तु हरिस्त्वां त्रायते स मामित्यत्र त्रायत इति क्रियानुषङ्गाभ्युपगमेऽप्येकतिङ्वाक्यमिति परिभाषितैकत्वानपायादिति केचित् । तच्चिन्त्यम् । तथा सत्ययं दण्डो हरानेनेत्यत्रास्तीति गम्यमानक्रियया दण्डस्य पृथगन्वयेऽप्युक्तपरिभाषितैकवाक्यत्वानपायाद्धरेत्यस्य तिङ्ङतिङ इति निघातापत्तेः ॥

## चौ ।

यत्तु लुप्ताकारनकार इति तत्राकारलोपेन नका-

रुलोपस्यासिद्धत्वात्तत्कथनं व्यर्थम् । सुहिडित्यत्र ब्रश्चेति षत्वं स्कोरिति सलोप इत्यसङ्गतम् । सलोपं प्रति षत्वस्यासिद्धत्वात् पूर्वं सलोपस्योदाहर्तुमुचितत्वात् ॥

## वसोः संप्रसारणम् ।

यत्तु छान्दसा अपि क्वचिद्भाषायां भवन्तीति मासश्छन्दसीति सामान्यापेक्षज्ञापकमाश्रित्य जग्मुषः तस्थिवांसमित्यादौ भाषायां क्वसुरुपपादनीय इति तन्न । पदन्न इति सूत्रे भाषासाधारणमिति व्याख्यानस्य प्राबल्योपवर्णनेन मासश्छन्दसीत्यस्याज्ञापकत्वात् । तस्मादुक्तक्वस्वर्थं छन्दसि वेति ग्रहणं सामान्यापेक्षं ज्ञापकमाश्रयणीयम् ॥

## इति हलन्ताः पुंलिङ्गाः ।

---

## नहो धः ।

यत्तु द इत्येव नोक्तं सन्नद्धमित्यत्र रदाभ्यामिति नत्वापत्तेः । झषस्तथोरित्यनापत्तेश्चेति । तच्चिन्त्यम् । दो दद्घोरित्यत्र स्वयं स्वीकृतदान्तपक्ष इव संनिपातपरिभाषया नत्वानापत्तेः । धग्रहणस्य श्रवणार्थत्वे नैवावश्यकत्वाच्छङ्काया निर्दलत्वापत्तेः । उत्तरे एतदनुक्तेर्न्यून-

त्वाच्च। न हि भवन्मते झषस्तथोरिति कृते जश्त्वं स्य
मसुक्तपरिभाषाविरोधात्। यदि तु प्रकृतसूत्रादि
ष्ट्या नत्वादेरसिद्धत्वेन तदृष्ट्या संनिपातविघाता
वात् परिभाषाया अप्रवृत्तिरत एव जग्धमित्यादौ स
पातेन जग्ध्यादेशे तन्निमित्तं तस्य धत्वम्। अत एवेकोय
चीत्यनन्तरं मय उञो वेत्येव सिद्धे यथास्थितसूत्रं कि
मित्यादौ वत्वस्यासिद्धत्वद्वारा ऽनुस्वाराभावार्थमित
कारः। अन्यथैको यणचीत्यनन्तरं पाठेऽप्युक्तपरिभाष
ऽनुस्वाराभावसिद्धेरलग्नतापत्तिः। अत एव दो द
रित्यत्र दान्तधान्तपक्षौ दर्शितौ भाष्ये। अत एव
स्यद्भ्यासैद्धामित्यादौ जश्त्वाद्युपन्यस्तं माधवादिभि
र्विभाव्यते विभाव्यतां नाम नन्वेतावता पूर्वापरस्व
न्यविरोधः परिहर्तुं शक्यः इति दिक्॥

## इति हलन्ताः स्त्रीलिङ्गाः।

यत्तु विमलद्युशब्देऽझलन्तत्वान्न नुमित्युदाह
वाःशब्दे तदुपन्यसनं तदनवधानात्। विश्वसृडा
प्रतिविधेयमिति प्रक्रिया। तत्रादिना देवेडुपयडादि
प्रतिविधानं च काम्यच्सूत्रे सृजिदृशोरिति सूत्रे चोप
दृक्ष्यति रज्जुसृड्भ्यामितिभाष्यप्रयोगात् क्वचि
षत्वमभ्युपगम्यत इति। यत्तु व्रश्चादिसूत्रे सृजियज

पदान्ते षत्वं कुत्वापवाद इति ऋगृत्विजोस्तु निपातना-
देव कुत्वम् स्रजञ्चत्युष्णिहतेरौणादिके क्विन्प्रत्यये बोध्य
इति क्विन्प्रत्ययस्येति प्रत्ययग्रहणप्रयोजनत्वेन भाष्य-
कृदुपन्यस्तस्य मार्गोऽसृगित्यत्र सृजेः कुत्वस्यैव सत्यनु-
पपत्तिः। पदान्तत्वाभावे भक्ष्यखाद्यौ इत्यादौ साव-
काशस्य कुत्वापवादत्वाभावाच्च। न च पदान्ते षत्वमप-
वादः पृथक्त्वादशलक्षणाभावात्। न च कुत्वस्यासिद्धत्वात्
षत्वमिति वाच्यम्। स्पृग्दृगादिष्वपि षत्वापत्तेः।
प्रत्ययग्रहणसामर्थ्यात्तन क्विनि तस्य जशि वस्य कुत्वमि-
ति तु प्रकृतेऽपि समानम्। ऋत्विजो निपातनात् कुत्व-
मिति तु प्रकृतेऽपि समानम्। ऋत्विजो निपातनात्
कुत्वस्वीकारेऽपदान्ते तदापत्तेः। पदान्ते प्राप्तस्य
कुत्वस्य षेण बाधे प्रसक्ते कुत्वप्रतिप्रसवार्थमेव नि-
पात्यत इति पदान्तमात्रविषयं कुत्वमिति चेन्न। तत्स-
न्नियोगेन निपातितस्य ऋगित्यागमस्यापि पदान्तवि-
षयतापत्तेः। सन्नियोगपरिभाषाविरुद्धं किञ्चित् पदा-
न्तविषयं किञ्चित्सर्वविषयमिति तद्युक्तिं विनाऽभ्युपग-
न्तुमशक्यमिति॥

## इति हलन्ता नपुंसकलिङ्गाः।

स्वरादेर्वाधकोन्तोदात्तत्वं काशिकायामुक्तमः
स्वधगित्यादिलक्ष्यविरोधादिति केचित् । स्वधवृ
मस्वस्तथ इत्यादावन्तोदात्तस्यापि स्वधः पाठादे
गिकमन्तोदात्तत्वमङ्गीकृत्य व्यत्ययेन क्वचिदाद्यु
त्वकल्पनात् काशिकोक्तान्तोदात्तत्वसामञ्जस्यात् ।
माङ्नमोः स्वरादिषु पाठः सत्ववचनत्वेऽप्यव्यय
इत्यत्र लक्ष्मीवाचकस्य माशब्दस्याव्ययत्वापत्ति
दूषणं तद्भ्रमसात् । तस्य माङ्त्वाभावात् ॥

## कृन्मेजन्तः ।

पिवध्या इत्यत्र कर्त्तरि शबिति तद्भ्रमसात् ।
व्ययकृतो भाव इति सिद्धान्तादिति केचित् । तन्न
नवबोधात् । तत्र हि कर्त्तरि शबिति सूत्रोक्त
तथा च यकि प्राप्ते व्यत्ययेन शबिति तेषां भाव
स्यैव परशवनुक्तन्यूनतेति दिक् ॥

## इत्यव्ययानि ।

---

## वनो र च ।

यत्तु वन्नन्तात्तदन्ताच्चेति व्याख्यातम् । तन्न वन्नः
दिति व्यर्थं व्यपदेशिवद्भावेन वन्नन्तान्तादित्यत
वन्नन्तस्यापि ङीप्सम्भवात् । व्यपदेशिवद्भावो ऽ

तिपदिकेत्याश्रयणे टिड्ढादिसूत्रेऽपि तथा वाच्यं स्यात्।
तदन्तविधिसद्भावादसम्भवयुक्तिकं च। अन्यत्र स्वयं तथा
व्याख्यानेन विरुद्धं च॥

## प्रत्यय—।

ननु निर्दिष्टपरिभाषया आपोऽव्यवहितपूर्वस्यात
इत्यर्थलाभात् सर्विकेत्यादावसंभवः। न च वचनसाम-
र्थ्यादिह ककारातिरिक्तेनाव्यवधानमाश्रीयत इति वा-
च्यम्। कात्पूर्वस्य व्यवहितसाधारणस्याश्रयणेन वचन-
सामर्थ्यादम्बिकेत्यादावेकादेशात् पूर्वं भवति इत्वमिति
कल्पनस्यापि संभवादिति चेन्न। न यासयोरिति ज्ञा-
पकान्न चेत्युक्तकल्पनस्यैवोचितत्वादिति॥

## त्यक्त्यपोश्च।

इह कौमुद्यां दक्षिणस्यां जाता दाक्षिणा-
त्येत्युक्तं तन्न विग्रहवाक्यं किन्तु अर्थकथनम्। त्यवि-
धावव्ययसाहचर्यादाजन्तदाक्षिणाशब्दात्त्यविधानादि-
ति बोध्यम्॥

## यञश्च।

यञ्चकारलोपे कृते हलस्तद्धितस्य हल उत्तरस्य
तद्धितयकारस्योपधाभूतस्येति केश्चिदुक्तम्। तत्र उप-

धाभूतस्येति व्यर्थम् । न च यस्येतिलोपस्याभीय-त्वेनासिद्धत्वादीत्वस्य ह्रस्व उभयस्य तस्याभावात्तदर्थं तदिति वाच्यम् । वचनसामर्थ्येनाल्लोपस्यासिद्धत्वाभावात् । कथमन्यथा आमहस्येत्यत्रोपधाभूतस्येति तैर्नानुवर्त्तितम् । किञ्चैवं सत्यल्लोपे कृते ह्रस्वाद्विलस्येति किमर्थमुदाहृतम् । न ह्युपधालोपस्याल्लोपापेक्षा प्रत्युत परत्वादुपधालोप एव प्रागुदाहर्त्तुमुचितः । नन्वनयोः परस्परमसिद्धत्वेन प्रागुदाहरणे कामचारः विप्रतिषेधस्य आभीयासिद्धत्वे जनसनखनामिति सूत्रे भाष्यकृता सिद्धान्तितत्वात् ॥

## काण्डान्तात् ।

यत्त्विह द्विकाण्डेत्यत्र द्वयसचो लुगित्यनूद्य प्रथमस्य द्वितीयस्य जर्ध्वमाने मतौ ममेति सिद्धान्तादुक्तमिति । तत्तुरुषस्याङ्गुलेरिति च सूत्रे द्व्यङ्गुलमित्यत्र द्विगोर्नित्यमिति द्वयसचो लुगिति । तत्परस्परग्रन्थविरोधादुपेक्ष्यम् । अन्यत्तु प्रक्रियाप्रदीपादवधेयम् ॥

## पुरुषात् प्रमाणे— ।

द्विपुरुषी द्विपुरुषेत्यत्र पक्षकालेन वार्त्तिकान्तरेण लुगित्यनूद्योक्तसूत्रस्य भाष्यवार्त्तिककाराभ्यामसु-

इत्यादिदमयुक्तमिति केचित् । तन्न । एवे चानियोग इत्यत्रोक्तरीत्या वृत्तिस्थवचनान्तरेण तदर्थात् । उक्त-सूत्रे हि द्विगोर्नित्यं लुगिति वृत्तौ पठ्यते । व्याख्यातं च हरदत्तेन अप्राप्त एवात्र लुग्विधीयत इति । यदपि पुरुषात् प्रमाणे इति सूत्रे द्विगोस्तद्धितलुकी-त्यनुवर्त्तते तत्सामर्थ्याल्लुगपि आक्षिप्यत इति तदपि पुरुषहस्तिभ्यामिति सूत्रे निराकरिष्यामः ॥

## केवलमामक—।

असरीभ्यो मथवेत्यत्रासरीशब्दे द्वितीयो वर्णो दन्त्योष्ठ्यो न पवर्ग्य इति हरदत्तः । तच्चापरीभ्य इति सांप्रदायिकपाठादिदं चिन्त्यमिति केचित् । अत्रे-यं चिन्ता । अपरशब्दः स्वाङ्गशिटामित्याद्युदात्तः तस्मात् ङीपि सिद्धो ऽपरीशब्द आद्युदात्तः स्यात् पठ्यमानश्चान्तोदात्तः । स च कथंचिद्बाहुलकादिना ङीपा साधनीय इति न प्रकृतोदाहरणं किन्तु शाखा-न्तरस्थमाद्युदात्तं तच्च दन्त्योष्ठ्याद्वितीयवर्णमिति न संप्रदायविरोध इति सहृदयैराकलनीयम् ॥

## वर्णादनुदात्तात्—।

अनुपसर्जनादित्यनुवृत्तं टिदादीनामिव वर्णस्य

विशेषणं न तु प्रातिपदिकस्य वैयर्थ्यापत्तेः। विभा सपूर्वस्येत्यत्र वृत्त्यादौ तथा व्याख्यातत्वाच्च। नेत्यस्या शलत्येति ग्रन्थम्। त्रिषु स्थानेषु एणी श्येणीति व्याखं यम्। पूर्वपदात् संज्ञायामिति च्छान्दसं वा णत्वम् नारायणवृत्तिस्थं नीण्येतान्यस्या इत्यादि वाक्यं तु न वि ग्रहः किन्तु तात्पर्यकथनम्। एवं च यथाश्रुततद्ग्रन्थ बलादिहानुपसर्जनग्रहणं प्रातिपदिकविशेषणमिति केषाञ्चिल्लेखो निर्मूल इति ध्येयम्॥

## अन्यतो ङीष्।

यत्तु कृष्णकपिलेत्यत्र कृषेश्चेति न प्रत्ययं कपेरि सौत्राद्धातोरिलजिति केश्चिदुक्तं तदुणादौ स्वयमुदा हृतेन कृषिर्वर्णे इति नक्प्रत्ययेन कमेः पश्चेति क मृधातुना च विरुद्धम्॥

## षिद्गौरादिभ्यश्च।

श्वानमाचष्टे श्वेवाचरतीति वार्थे णिचः क्विपो वा कर्त्तरि क्विप् तदोपसर्जनत्वात् ङीबभावे निःशुनीत्या- दि वदन् ङीपि शुनीति प्रकाशः। तन्न णिचि संप्रसा- रणटिलोपयोरुक्तरूपं दुर्लभमिति केचित्। तच्चिन्त्यम्। अत्रत्यकौस्तुभग्रन्थविरोधात्। प्रकृत्यैकाजिति प्रकृति-

त्वाट्टिलोपासम्भवाच्च । न च येननाप्राप्तिन्याये-
नन्तरस्येति न्यायेन च टेरित्यस्यैव बाधान्नस्त-
त इति टिलोपापत्तिर्दुर्वारैवेति वाच्यम् । णा-
ठवदित्यनेन नस्तद्धित इत्यस्यानतिदेशात् । इष्ठनि
[ कार्यं तदतिदिश्यते । न च इष्ठनि नस्तद्धित
त क्वचिद् दृष्टम् । ब्रह्मिष्ठ इत्यादौ तु परत्वाट्टेरि-
त्येव प्रवृत्तेन तस्य नामधातौ माधवादिभिरुक्तत्वात् ।
ान्तरे तु पञ्चान्तराभिधानमिति अत्रानुनासिक-
ति कुतो नेत्यादित्वन्यदेतत् ॥

## जानपद—।

इह नीलगुणविशिष्टवचनो नीलशब्दो नतु तेन
नित्यधिकारे नील्याऽनित्यन्नन्तः अत्र कृति ङीप-
प्रकृतित्वेन गुणप्रवृत्तिनिमित्तकस्य प्रथमसुपस्थि-
तमादायैव लक्षणस्य चरितार्थत्वात् । एवं यत्कैश्चिन्नि-
अनाच्छादनं चेत् नीलाऽन्येति प्रत्युदाहृत्य नील्या
ा शाटीत्यर्थः नील्या अन् वक्तव्य इत्युक्तम् । तदनव-
नात् । न ह्यन्नन्ता प्रकृतिर्येन तदुदाहरणमर्थवत्
यथा नील्या रक्ता गोनीली प्रसज्येत । न चेष्टा-
त: । उक्तन्यायविरोधात् ॥

## पुंयोगादाख्यायाम् ।

यत्तु गोपालिकेत्यादिसिद्धये पालकान्तान्नेति कश्चित्पठति । तन्न । निषेधं विना टाबभावे पालकान्तत्वासम्भवात् ॥

## इन्द्रवरुण—।

पूर्वसूत्रे केकयीत्यादिसिद्ध्यर्थं यथाकथञ्चित् पुंयोगो ङीषो निमित्तम् । न तु दम्पतिभाव एवेति सिद्धान्तितत्वात्तेनैव ङीषि सिद्धे आनुको नियमार्थं यवनाल्लिप्यामिति वार्तिकम् । दम्पतिभाव एवेति पक्षेऽपि लिपिगतपुंयोगेन लिपौ वर्तमानाद्यवनशब्दादनेन ङीषपि विधीयते । एवञ्च तस्येदमित्यणो बाधकं ङीषिति कैयटप्रभृतयश्चिन्त्याः । अर्यक्षत्रियाभ्यां वा स्वार्थे । क्वचित्वार्येत्यादिपाठो भाष्यकैयटवृत्तिपदमञ्जर्यादिपुस्तकेषु दृश्यते । तत्र ऋधातावर्यः स्वामिवैश्ययोरित्युदाहृत्याऽन्यत्र ण्यत् आर्य इत्युक्त्वा आर्यक्षत्रियाभ्यामित्यानुग्ङीषावुदाहरन्माधवोऽनुकूलः अर्याणीत्यमरस्त्वार्याणीत्येव पठितुं शक्यः । क्वचित्तथैवोपलभ्यत इति न प्रतिकूलः । तत्रार्यः स्वामिवैश्ययोरित्युदाहरन्ती तट्टीका त्वर्यपाठे अनुकूलेति

मं पुनर्विपश्चितः प्रष्टव्याः । अत्रानुग् ह्रस्वादिरेव
घत्वाद्वक्तव्य इति हरदत्तः । अत्र केचिदनुकि कृते
:रूपप्रसङ्गः । न चाकारोच्चारणसामर्थ्यात् तद्बा-
। अल्लोपोऽन इत्यस्य बाधेन चारितार्थ्यादिति । तन्न
तरङ्गपररूपचारितार्थ्ये बहिरङ्गाल्लोपबाधनार्थत्वा-
ल्पनात् । विनिगमनाविरहेऽपि पररूपबाधकत्वस्या-
श्यकत्वाच्च । न चाल्लोपबाधनार्थं तदाप्यावश्यकम् ।
न्यथा वार्णादाङ्गं बलीय इति न्यायेन पररूपात्
गल्लोपस्यैव प्राप्तेः पररूपाप्राप्तौ तद्बाधकत्वास्यास-
वात् । तथा चावश्यकत्वादल्लोपबाधनार्थत्वमेवा-
िति वाच्यम् । भिन्नाश्रयत्वेन श्वोन इत्यादाविव
र्णादाङ्गमित्यस्येहानुपस्थितेः । नुकाल्लोपोऽन इत्य-
प्रतिपदोक्तत्वाभावादप्राप्तेश्चेति दिक् ॥

## स्वाङ्गाच्चोपसर्जनात्—।

यत्तूपसर्जनव्यावर्त्यं शोभना शिखा सुशिखेति तं-
न्त्यम् । सुपाणिनिष्टत्यथादेत इत्यत एवैतद्व्या-
ते: ॥

## सख्यशिश्वी—।

इतिशब्दः प्रकारे स च भाषायामित्यस्यान-

न्तरं द्रष्टव्यः। तेन क्वचिच्छन्दस्यपि। आधेनवो धुनय-न्तामशिश्वीरिति केचित्। तन्नैतौ ङीषन्तौ निपा-त्यत इति वृत्तिदर्शनादुदात्तः। वेदे त्वाद्युदात्तपाठात् कथमनेन सिद्धिः। अत एव वेदभाष्ये सत्यशि-श्वीति ङीषमुदाहृत्य एतदस्वरसेन शिशुशब्दाच्छ-न्दसीवनिपाविति मत्वर्थीये ईप्रत्यये ततो नञ्समासे चाचाशिश्वीति साधितम्। तत्र ईप्रत्यये ओर्गुणाभा-वस्त्वयस्मयादित्वाच्छान्दस इति तस्य भावः। तस्माच्चि-न्त्यमेतत्। सखी सदा परिभावेति हरदत्तोक्तमुदा-हरणमनवद्यम्॥

## जातेः-।

यत्तु गोत्रं च चरणैः सहेत्यत्र गोत्रशब्दमपत्यप्र-त्ययान्तपरं व्याख्यायौपगवीत्युदाहृतम्। यच्च व्याख्यायामणन्तङीपं परत्वादयं बाधत इत्यादि। तत्कौरव्येति सूत्रे ढक् च मण्डूकादिति अपत्या-णन्तान्मण्डूकशब्दान्ङीषोऽपवाद इत्यर्थकत्वग्रन्थवि-रुद्धम्। भाष्यादिविरुद्धं चेति तस्यापत्यमिति सूत्रे व्यु-त्पादयिष्यामः॥

## ऊङुतः।

यत्तु लिङ्गविशिष्टपरिभाषया स्वादयः। प्राचा

तु आदिवद्भावात् स्वादय इत्युक्तम्। तन्नेदं वक्तव्यम् । परं प्रत्यादिवद्भावो विधीयते । तथा च इहाप्रत्यय इति प्रतिषेध एव स्यान्न तु स्वादय इति। तदनवधानात् । आदिवत्वेन ह्यूङ्त्वे लिङ्गविशिष्टपरिभाषया स्वादयः। लिङ्गबोधकप्रत्ययान्तमेव हि लिङ्गविशिष्टमिति इत्यादौ स्थितम्। स्वस्यैव परं तदनाश्रयणे उक्तपरिभाषोपन्यासोऽसंगतः स्यादिति सुधीभिर्भाव्यम् ॥

## संहित-।

शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात् संहितोरूः सैव शफोरूरिति । केचित् । तथा सति ऊरूत्तरपदादौपम्य इत्यत एव सिद्धत्वादिह शफग्रहणवैयर्थ्यापत्तेः । तस्माच्छफशब्दः संहितपर्याय इति हरदत्तोक्तिरेव साधुरिति ध्येयम् ॥

## शार्ङ्गरवाद्यञो ङीन्।

इह नृनरयोरिति गणसूत्रम् । तत्रात इत्यनुवृत्त्या नरान्त्याकारलोपेनापहारात् सामर्थ्यात्तदाद्यकारस्य वृद्धिः । यत्तु नारि रान्तं लुप्ताकारानुकरणं नरः अः नरःना च नरश्च तयोरिति व्याख्यानम्। नरशब्दस्य

जातिवाचिन इह ग्रहणाभावे कथं तस्मान् ङीन् । न च जातेरिति स्त्रियामिति चाधिकारान्नरित्यस्य जातेः स्त्रियां वृत्तेस्तद्घटितान्नरशब्दादेव ङीनिति वाच्यम् तथा सति वानरादिशब्देऽपि ङीन्वृद्ध्योः प्रसङ्गात् न चायं समुदायोऽवयवेन व्यभिचरतीति न्यायेन वानरादिव्यावृत्तिः । अकारविशेषणनरि तस्य ङीनि प्रकृतित्वेनान्वयाय पृथगनुसन्धानस्य क्लिष्टत्वात् उक्तरीत्यानुपपत्तिपरिहारस्य सुसाधत्वाच्चेति विभावनीयम् । अत्र पुत्तशब्दः पठ्यते । तेन पुत्तीव हर्षं हृदये तनोतीत्यादिसिद्धिः । अत एव वा सूतकापुत्रकावृन्दारकाणामिति प्रत्ययस्थादिति सूत्रस्थवार्त्तिके पुत्रिकाशब्दे ङीन इवर्णस्य पक्षेऽकारविधानार्थं वा अ इति प्रश्लेषः । अन्यत्र नित्यत्वबाधनाय पक्षेऽकार इति आकारः । एवं सति कारे सत्यागरस्येति सूत्रे सूतोग्रराजभोजकुलमेरुभ्यो दुहितृपुत्त्र इ्वेति वार्त्तिकं व्यर्थमिति केचित्तन्न । नादिन्याक्रोशे पुत्त्रस्येत्यत्राभिव्यक्तपदार्था ये इति न्यायेन प्रसिद्धपुत्रग्रहणे लिङ्गविशिष्टपरिभाषया ङीनन्तस्यापि ग्रहणमिति स्थिते ङीनन्तेन सूतपुत्र्यादिसाधने सूतपुत्र्यादिनीत्यादौ नादिनीति हित्वनिषेधः स्यात् स मा भूदिति सतोग्रेति वार्त्तिकारम्भादिति । किं च

पुत्त्रः पुंभ्य इति पुंवाचकेभ्यः परस्योत्तरपदस्य पुत्त्रशब्दस्याद्युदात्तो विधीयते । स च ङीनन्तपुत्त्रीशब्देन सूतादीनां समासेऽप्युक्तन्यायेन भवति । न भवति दुहितुः पुत्त्रडादेश इति स्वरभेदोऽपि वार्त्तिकप्रयोजनम् । अत एवोक्तं प्रक्रियाप्रकाशे । स्वरे विशेष इति । तत्र यद्यपि राजपुत्त्रीत्यत्र नाचार्यराजेत्युत्तरपदाद्युदात्तत्वे पुत्त्रडादेश इति पक्षे उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे च विशेषाभाव इति वार्त्तिके राजशब्दो नैतत्प्रयोजनकस्तथापि तत्रोक्त एव प्रयोजन इति मन्तव्यम् । किंच निरनुबन्धकपरिभाषयोक्तसूत्रयोः प्रसिद्धपुत्त्रशब्दग्रहणं न त्वादेशपुत्त्रड्ग्रहणमित्युक्तप्रयोजनं स्पष्टमेवेति ॥

## इति स्त्रीप्रत्ययाः ।

---

## प्रातिपदिकार्थः ।

अत्र परिमाणं प्रातिपदिकार्थः तत्र च प्रत्ययार्थो ऽभेदेन प्रकारस्तद्धितार्थदेवतायामिव तेन द्रोणो व्रीहिरित्यत्र द्रोणाभिन्नपरिमाणपरिच्छिन्नो व्रीहिरित्यर्थ इति केचित् । तन्न । द्रोणं व्रीहिमानयेत्यां-

द्राविवेहापि द्रोणपदस्य तत्परिमितलक्षणयैवोपप
प्रथमायाः परिमाणार्थत्वे मानाभावात् । न
परिमाणग्रहणं व्यर्थमिति वाच्यम् । द्रोणपरिमित
लक्षणायां परिमिताद्यंशस्य नियतोपस्थित्यभा
प्रातिपदिकार्थत्वाभावात् । तन्मात्रे विधीयमाना प्र
मा न स्यादिति परिमाणमात्राधिक्ये प्रथमाविधा
तत्सार्थक्यात् । न च गौर्वाहीक इत्यत्र मुख्यार्थ
गोशब्दात् प्रथमोत्पत्तौ वाहीकसामानाधिकरण्ये सह
लक्षणायामपि कृतायाः प्रथमाया इव प्रकृतेऽपि द्रो
शब्दोत्तरप्रथमाया अपि व्रीहिसामानाधिकरण्ये द्रो
शब्दलक्षणायामप्यनिवर्त्तनमिति किं परिमाणोक्त्या
वाच्यम् । एवं रीत्या परिमाणग्रहणस्य हरदत्तादि
प्रत्याख्यातत्वात् । न चोक्तविषयिताशाली बो
लक्षणयोपपादयितुमशक्य इति परिमाणे प्रथमाविध
नमावश्यकमिति वाच्यम् । द्रोणो व्रीहिरिति वाक्य
त्तरपरिच्छेद्यत्वसम्बन्धेन द्रोणरूपपरिमाणप्रकार
व्रीहिविशेष्यकबोधवानित्यनुभवस्य प्रामाणिकैर
तेः । व्रीहिपरिच्छेदकसंदेहनिवृत्तेस्तु लक्षणया अ
देन द्रोणपरिमितप्रकारकव्रीहिविशेष्यताकबोधा
प्युपपत्तेः । अन्यथा परिमाणप्रत्याख्यानं तैरपि वच
नानां कथं सङ्गच्छेतेत्यलम् । यत्तु तद्धितार्थकदेवता

मभेदेन प्रकृत्यर्थोऽन्वेतीति तन्न। साध्य देवतेत्यत्र देवतायाः प्रकृत्यर्थोपाधित्वेन प्रत्ययार्थत्वाभावात् देवतावाचकात् प्रथमान्तात् षष्ठ्यर्थे प्रत्यय इति भवद्भिरन्यैश्च सूत्रार्थविवरणादिति॥

## इति प्रथमा।

---

## कर्त्तुरीप्सित—।

कर्त्तुरिति क्तस्य वर्त्तमान इति कर्त्तरि षष्ठी। यद्यपि कर्तृकर्मणोः कृतीति कृद्ग्रहणं तद्धितप्रयोगे षष्ठी मा भूदिति कृतम्। तेन व्याकरणं प्राज्ञ इत्यादौ न षष्ठी तथापि क्तस्येति षष्ठी तद्धितप्रयोगे वर्त्तत एव तत्र तदुत्पत्तौ बाधकाभावात्। एवं च गदमदेति सूत्रे यमग्रहणं पोरदुपधादिति यति सिद्धेऽपि सोपसर्गाद्यमेर्निवृत्त्यर्थमिति स्थिते त्वया नियम्येत्यादौ नियमे साधुरिति तद्धितो यदित्युक्त्वा कथं त्वयेति तृतीयेति पूर्वपक्षे केषाञ्चित् समाधानान्तराभिधानं व्यर्थमिति ध्येयम्॥

## अकथितं च ।

दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक् । निह्वकृष्मन्यवहृदण्डग्रहमुषपचकर्मभाक् । अत्र केचित् । यत्तु द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति प्रकाशमनूद्य तद्भ्रमसादिति वचनं तदेव रभसकृतम् । भाष्यादिविरोधात् । तथा हि कर्तुरीप्सिततमेति सूत्रे तण्डुलानोदनं पचतीति प्रयोगोपपत्त्यर्थत्वात्तण्डुलानां विक्लेदने ओदनस्य कर्मत्वमिति भाष्ये व्युत्पादितम् । पचेर्द्विकर्मकत्वे तु किमेतद्वर्णनक्लेशेनेति । अत एव प्रकृतसूत्रे करणाधिकरणयोस्तु पचादिरवकाशो न हि तत्रास्य प्रसङ्गो दुहादिपरिगणनादिति हरदत्तः । कैयटोऽपि कर्मवत्सूत्रे दुहिपच्योरिति वार्त्तिके उदुम्बरफलानि पच्यते इत्यत्र कर्तृकदुम्बरस्य कर्मस्थक्रियत्वाभावात् सकर्मकत्वाच्चाकर्मकत्वेऽप्राप्तेऽयं विधिरित्युक्त्वा अन्यतमत्वेन द्विकर्मकः पचिः तेन कर्मणा तुल्यक्रियत्वेऽपि सकर्मकादेव सूत्रेणाप्राप्तिरित्युक्तम् ॥

उभसर्वतसोः । उभशब्देनोभयशब्दो लक्ष्यते उभशब्दात्तसोऽसम्भवादिति प्राञ्चः । केचित्तु वृत्तिविषयेऽयच्प्रवृत्तावपि उभयशब्दाद्विहितो यस्तदन्तस्यैवेति यथाश्रुतं साध्विति । तन्न । वृत्तिविषये अ

प्रवृत्तिर्हि वृत्तेः प्राक् न तु पश्चात्। तथा सति साकच्का-
भयशब्दादयचि उभकयपुत्र इति स्यात् कसहिताच्च
उभयकपुत्र इति वैषम्यं स्यादिति काकचोर्नास्ति विशेष
इति सर्वादिसूत्रस्थोभयशब्दप्रत्याख्यायकभाष्यविरोधः।
यत्तु कथं धिङ् मूर्खेति सम्बोधनपदस्य क्रियान्वयस्य
नियमेनोक्ततया धिक्शब्दप्रयोगाभावात्। क्रियापदं च
क्वचिच्छ्रुतं क्वचिदाक्षिप्तमित्यन्यदेतत् तथाच मूर्ख-
सम्बोध्यकं निषिद्धाचरणादि निन्द्यमित्यर्थं इति।
तन्न। सम्बोधनपदस्य क्वचित् क्रियान्वयित्वेऽपि सर्वत्र
तथात्वे मानाभावात्॥

## कालाध्वनोः-।

मासस्य द्विरधीते। यत्तु कृत्वोर्थप्रयोग इति
षष्ठीत्याहुस्तन्न। तत्र हि शेषग्रहणानुवृत्त्या द्विरह्नो
भोजनमिति कृदन्तेन समासनिवृत्तेरेव फलत्वात्।
तस्मात् षष्ठी शेष इति सूत्रेणैव षष्ठीति तत्त्वमिति।
तन्न। अनेन षष्ठीविधाने हि अस्याः षष्ठ्याः प्रतिपद-
विधानत्वात् प्रतिपदविधाना षष्ठी न समस्यते समा-
सनिवृत्तिरिति कृत्वोर्थसूत्रविधायकत्वावश्यकत्वे तिङ-
प्रयोगेऽपि परत्वादनेनैव षष्ठ्या उचितत्वात्।
इत्युक्तम्॥

कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ इति ।

इति द्वितीया ।

इति श्रीचक्रपाणिदत्तविरचिते प्रौढमनोरमाखण्डने
द्वितीयाकारकप्रकरणं समाप्तम् ॥

